विमर्शः अनुवर्तमानो न केनचित् उन्मूल्यमानः संवेद्यते, द्विचन्द्रादि च यद्यपि ह्लादोद्वेगयोः उपयुज्यते, तथापि द्विचन्द्राभिमानी न तावतीं[23] तत्र अर्थक्रियाम् अभिमन्यते अपि तु यादृशी एकेन शशिना कर्तव्या — तिमिरापसारणादिरूपा, तादृश्येव अपरेण, इति न तद्विगुणाम् अर्थक्रियाम् तत्र अध्यवस्यति[24], तस्यां च[25] असौ न उपयुज्यते, व्रज्यायां तु यामेव ग्रामप्राप्तिम् अध्यवस्यति तस्याम् अविकलायाम् उपयोगोऽस्या, इति — स्थैर्यात् उपयोगाच्च एकानेकरूपक्रियातत्त्वालम्बना बुद्धिः सत्यैव, एवं संबन्धादिषु कालपर्यन्तेषु वाच्यम् उत्तरकारिकासु स्फुटीभविष्यति ॥ १ ॥

ननु[26] एकत्वम् अनेकत्वं च परस्परं विरुद्धे,

---

२३ द्विचन्द्रकरणीयां बह्वीम्।

२४ तदित्थं यद्यपि च द्विचन्द्रादेरपि प्रीत्या करणलक्षणार्थक्रिया वेद्यत एवेति सत्यतोपयोगिताद्यपि अस्य स्यादेव तथापि प्रमात्रध्यवसितार्थक्रियाकारित्वाकारित्वाभ्यां ते सत्यासत्यत्वे विभक्ते न बाह्यतासाध्ये द्विचन्द्रेऽर्थक्रियाध्यवसिता नास्तीत्यसत्यतोक्ता, इत्युक्तप्रायं भवति।

२५ तस्यां चेति द्विगुणायामर्थक्रियायाम्।

२६ अहो महत् कौशलं सुबुद्धिमाहात्म्यशालितया भवतः शोभते यदाश्रयापेक्षामुपेक्ष्योर्ध्वं सौधनिर्माणेच्छां करोति इत्याक्षेपगर्भं पृच्छति —

कथम् एकत्र वस्तुनि स्यातां, ततश्चायं बाधकप्रमाणकृतः स्थैर्योन्मूलनप्रकारः? इत्याशङ्क्याह

तत्रैकमान्तरं[27] तत्त्वं
तदेवेन्द्रियवेद्यताम् ।
संप्राप्यानेकतां याति
देशकालस्वभावतः ॥ २ ॥

---

नन्विति, यदुक्तं स्थैर्योपयोगाभ्यां सत्या इति तदसिद्धम् अबाधितत्वविशेषणासंभवात्, विशेषणासिद्धौ च हेत्वसिद्धिरप्यसिद्धा स्वत एव संपन्नेति अविभक्तस्यैव तत्त्वस्यैकानेकतोपपत्तिमाह सूत्रेण ।

२७ ननु तथापि न हेतोः सिद्धिः—अबाधितत्वविशेषणस्यासंभवात्, 'एकानेकात्मका हि द्रव्यादय' इति वदता भवता यदेवैकं तदेवानेकं तच्च कथमिति स्वयमेव बाधकमुक्तमित्याक्षेपं प्रतिक्षेप्तुं, तत्रैकमिति—तत्र क्रियादौ क्रियादेः सत्यत्वे वा स्थिते सति क्रियादेर्वा ये एकत्वानेकत्वे उक्ते ते वृत्तिगुणीकृते अपि प्रधानप्रमेयतया इह समर्थनीये इति परामृश्य निर्धारणं, तयोरेकत्वानेकत्वयोर्मध्ये एकत्वमेवं समर्थ्यते नैकत्वं च, एवमिति नीलादीनां भावानां पारमार्थिकं यदान्तरं संविन्मात्रलक्षणं तत्त्वं तत्र न कलना काचित्—अभेदघनत्वात् एकताया अपि तत्राभावात्, यत्तु आन्तरमाभासान्तरानामिश्रम् अन्तरङ्गमान्तरं च अन्तःकरणमात्रवेद्यं तत्त्वमेकं तदेव पुनरत्यक्तैकताकं बाह्येन्द्रियवेद्यतां प्राप्य इहामुत्रेति, अधुना तदेति, कृशोऽकृश इति च देशादिभेदादनेकतां याति, न च विरोधः—प्रतीतेरखण्डनात् कारणत्वाकारणत्वयोरिव व्यवहारमात्रपरमार्थतया विषयभेदस्यापि सुवचत्वात्, तस्मादेकत्वानेकत्वयोर्न विरोधः कश्चित् चैत्रः चलतीति क्रियायाम्, एवं संबन्धादौ वाच्यमिति सूत्रार्थः ।

इह तावत् चैत्रे चलति दृष्टे न जातुचित् न चलति अयम् इति बुद्धिः जायते — न रजतम् इतिवत्, द्विचन्द्रेऽपि नायं द्विचन्द्रः तिमिरवशात् अहम् उपप्लुतनयनः परम् एवं वेद्मि इति भवति उन्मूलनाबुद्धिः[२८]; यत्तु उक्तम् — एकमेव कथम् अनेकं भवति इति, तत्र उच्यते — इह कारणमेव[२९] कथम् अकारणं भवति, अथ उच्यते — विषयभेदात् तथा[३०], इति तद्विषयभेदे एतत् न विरुध्यते, इति केन[३१] अयं वितीर्णो वरः? संवेदनेन इति चेत् 'चलति' इत्यादौ संवेदनमेव अस्माभिः प्रमाणीकृतं किमिति न सह्यते[३२], विषयभेदोऽपि च अत्र वक्तुं न

---

२८ उन्मूलनाबुद्धिरिति — पूर्वोक्तमेवानुसारितम् 'अत्र न कश्चिद्विवाद' इति प्रतिपादनार्थम् पराक्षेपमत्रेदानीमुत्थापयति, यत्तूक्तमिति समर्थनार्थम् ।

२९ पक्वमृदादौ बीजं कारणं सोषरायां पुनरकारणमिति ।

३० तथेति — कारणमकारणम् ।

३१ अविरोधतापादनार्थमेव पूर्वोक्तं पुनरप्याक्षिपति — केनेति । यदुक्तम् 'एकमनेकं कथं भवति' इत्थं वरो भवदभिमतो वाग्वादः केन वितीर्णो भवद्भिरुपलब्ध इत्यर्थः ।

३२ ततश्च किमिति चास्मभ्यमस्थान एव भवन्तोऽभिज्ञातारोऽपि प्रकुप्यन्तीति किमिति न सह्यत इति सूचितम् ।

न शक्यते, तथाहि – आभासान्तरेण[३३] असंभेदने तदेकाभासमात्रम्, अत एव अन्यापेक्षावियोगात् अन्तरङ्गत्वात् आन्तरम् अनुवर्तमानं तथाभूताभासमात्रग्रहणोचितान्तःकरणवेद्यतया च आन्तरं तथा[३४] स्वरूपापरिच्युतेः तत्त्वम् आभासान्तरयोगेन तननसहिष्णुत्वाच्च तत्त्वम् 'एकम्' इति प्रतीयते, तदेव देशाभासेन इह अमुत्र इति, कालाभासेन अधुना तदानीमिति, स्वभावाभासेन कृशः स्थूल इत्यादिना, मिश्रतया अनेकमिति बाह्येन्द्रियवेद्यतायां प्रतीयते, तथा[३५]

'स्वामिनश्चात्मसंस्थस्य ……………… ।'

इति उक्तनीत्या विश्वमेव आन्तरं सत् एकम्,

---

३३ आभासान्तरेण – चलतीत्यादिना, असंभेदने अनामिश्रत्वे ।

३४ आभासमात्रग्रहणोचितान्तःकरणवेद्यत्वेऽपि, तत्त्वमित्याद्यर्थे तच्छब्देन सर्वनामपरामर्शः । द्वितीये च 'तनु विस्तारे' इति धातोः परामर्शः । अत्रेत्थं योजनया स्फुटप्रतीतिः तत्त्वमिति नीलादीनां भावानां पारमार्थिकं संविन्मात्रलक्षणं तत्र न कश्चित् कालत्वेऽवच्छेदोऽभेदघनत्वादेकताया अपि तत्राभावात्, तदेव यदा पुनरान्तरमाभासान्तरानामिश्रमन्तरङ्गमेकं तत्त्वं तदेव पुनर्देशकालस्वभावतोऽनेकतां याति तत्राप्येकत्वमनपायि रूपमनुगतमेवेति, अनेकमिति व्यवहारमात्रमेकानेकमेवेत्यागमेषु पठ्यते न च विरोधः कश्चित् – प्रतीतेरखण्डनात् ।

३५ अपरथा व्याचष्टे तथेति ।

तदेव सान्तर्विपरिवर्तिनः उभयेन्द्रियवेद्यत्वम्, इति वक्ष्यमाणकार्यकारणभावतत्त्वदृष्ट्या इन्द्रियवेद्यतायाम[36]नेकम् – देशाद्याभासमिश्रणात् इति, [37]एकत्वम् – आभासान्तरामिश्रताया अन्तःकरणैकवेद्यत्वे चिन्मात्रतायाम्, अनेकत्वं पुनर् – आभासान्तरमिश्रतायाम् उभयकरणवेद्यत्वे चिदतिरिक्तताभासने च, इति – स्फुटो विषयभेदः, [38]तस्यैव च तथात्वम् इति परामर्शबलादेव कारणाकारणवत् उपादानसहकारि[39]वत्। अथ [40]व्यपदेशमात्रम् एतत् 'कारणम्

---

३६ बहिष्करणवेद्यतया सर्वप्रमातृसाधारण्येन बहीरूपत्वे सत्यनेकत्वम्।

३७ अयमत्र भावः – सर्वेषामेव नीलमधुरकर्कशादीनां पदार्थानां तत्त्वतश्चिन्मयत्वात् एकैकस्य तद्धर्मयोगात् विश्वात्मत्वं विश्वशरीरत्वं च – इतीश्वरात्मतायामभिन्नत्वमेव युक्तं वक्तुं नैकत्वं, तद्धि द्वित्वादिप्रतियोग्यपेक्षमप्रतियोगिनः कथं स्यात् तदेतदत्रोक्तं 'विश्वमेवान्तरं सत्' इत्यादिना। यदा पुनस्तस्य नीलादेरभिन्नस्यापि अन्तःकरणवेद्यतया सर्वप्रमात्रसाधारणत्वेनात्ममात्रव्यवस्थानात् यदान्तरत्वं तदैकत्वेनाभासो बहिस्त्वनेकत्वेनेति तदेतदुक्तमेकमिति, तत्रायं विभागः – सान्तर्विपरिवर्तिनः उभयेन्द्रियवेद्यत्वमिति, अन्तःकरणवेद्यतायामेकत्वं बहिष्करणवेद्यत्वे पुनरनेकत्वमिति तदेतत्सर्वमागूर्य सूचयन्नाह – एकत्वमित्यादिना।

३८ तस्येति विषयभेदस्य एकानेकरूपत्वम्।

३९ यथाहि उपादानस्य सहकारिसामग्र्यभावेऽनुपादानत्वम् इति।

४० ननु च कथं कारणमकारणं तस्यैवान्यत्र कारणतादर्शनात्, तस्मात् तत्क्षणं व्यपदेशमात्रमेव तत्, अकारणमिति नहि कदाचिदपि कारणमकारणं संभवति।

अकारणं च' इत्यादि, तदिहापि[४१] एकमनेकमिति व्यवहारमात्रम्, नीलं पीतम् अविकल्पकं सविकल्पकम् इत्यपि सर्वं मायापदे व्यवहारमात्रम्[४२] इति सर्वं समानम्, तस्मात् एकत्वानेकत्वविरोधो न बाधकः, तदेतत् एवकारेण उक्तम्। तत्र इति – तेषु क्रियादिषु यत् आन्तरं तत्त्वं तदेकं, तदेव इन्द्रियवेदनीयतां प्राप्य देशादिभेदात् अनेकतां याति इति संबन्धः, तत्र इति सत्यत्वे स्थिते तयोर्वा एकत्वानेकत्वयोः मध्ये 'एकत्वमेवम् अनेकत्वमेवम्' इति योजना ॥ २ ॥

ननु[४३] एवं विषयभेदे अभ्युपगम्यमाने यदा एकं प्रतिभातं भवति तदा न अनेकम्, अनेकप्रतिभासे च न एकं प्रतिभातम्, इति कथम् एकानेकरूपं वस्तु स्यात्, तथाहि[४४]

---

४१ फुल्लितमस्मन्मनोरथसुरविटपिनेति सरभसमाह तदिहापीति।

४२ अन्तरभिन्नमेव हि तत्त्वं संविन्मात्रतया, मायाप्रमातुः पुनरन्तःकरणाभासात् बाह्यकरणाभासाच्च बहिर्भेदात् वस्तु फलत एकानेकम्।

४३ यदुक्तम् विषयभेदादेकानेकत्वविरोधो नो बाधकः, तदाक्षिपति नन्वित्यादिना।

४४ बाधकप्रमाणाभावेपि ग्राहकाख्यप्रमाणाभावमाह – तथाहीत्याद्या-

बाह्येन[45] इन्द्रियेण चैत्रो विचित्रदेशैकः[46] परम् अनुभूयते, न तु अनेकाभाससंमिश्रीकारे बाह्येन्द्रियजस्य अविकल्पकस्य व्यापारः— संनिहितविषयबलोत्पत्तेः अविचारकत्वात् इत्याहुः[47], विकल्पेनापि मानसेन तथाभूतं[48] वस्तु नैव स्पृश्यते इति कया धिया[49] वस्तु एकानेकरूपं गृह्येत? इति[50] परव्यामोहनिवर्हणाय आह

---

शङ्कया, ग्रहणं हि द्विविधं—चाक्षुषं मानसं च, तत्र चाक्षुषानुभवाभावसूचनमित्याहुरित्यन्तं, मानसानुभवाभावसूचनं च नैव स्पृश्यते इत्यन्तम्।

४५ बाह्येनेति चाक्षुषानुभवेन।

४६ देशभेदभिन्न एव।

४७ अर्थसंनिधिमात्रेण ज्ञानस्योत्पत्तेरविचारकत्वम्, बाह्येन्द्रियजं हि ज्ञानं समीपवर्तिविषयोत्पन्नम् एकानेकमिश्रीकारस्तु संनिहितासंनिहितभावविषयमत एवाविचारकम्।

४८ एकानेकरूपं वस्तु, भावासंस्पर्शिनो हि विकल्पाः इत्युक्तेः।

४९ धियेत्यनुभवेन।

५० अयं भावः—यद्यप्यविकल्पे चाक्षुषानुभवे सन्निति वा घट इति वा सत्तामात्रघटमात्रावभासादौ सामान्यादेराभासः तथापि तदानीं तत्सामान्यादि निजजीवितं न प्रतिलभते, तथाहि समानोपरञ्जकता सामान्यजीवितं, संबन्धिभेदोद्रेकः संबन्धजीवितम्, प्रस्मर्यमाणक्षणभेदैक्यग्रहो हि क्रियाजीवितम्, अवयवराशीकरणं द्रव्यजीवितम्, अवध्यवधिमद्भावावभासो दिगाभासजीवितम् तच्चैतत्सर्वं विकल्पने एव स्फुटमभिव्यज्यते नाविकल्पे चाक्षुषानुभवादौ, तत्र हि सर्वे प्रमातारः स्वलक्षणाभासेनैकीभवन्ति, मायाप्रमातुर्हि सकलवेदिनोऽपि तावति विषयांशे परमेश्वरेण सहैकतामापाद्य परमेश्वररूपतयैवाभेदेन प्रकाशनं

तद्द्वयालम्बना एता
मनोऽनुव्यवसायि सत्।
करोति मातृव्यापार-
मयीः कर्मादिकल्पनाः[५१] ॥ ३ ॥

---

विमर्शनं च क्रियते प्रकाशनमेव विमर्शनात्मकम् अत एव च तावन्तं कालमदृष्टकल्पा एव तेऽर्था मायीयप्रमात्रा येषु विकल्पनोत्पन्ना इत्याहुः, मास्तु चाक्षुषानुभवेन ग्रहणं मानसेन भविष्यतीत्यत आह विकल्पेनापीति, विकल्पनं हि मनसोऽनुव्यवसायरूपं यस्मिन्नवसरे मायाप्रमातुरभिव्यक्तिः, न च वस्तुस्पृग्विकल्प इति परव्यामोहदलनार्थं सूत्रमाह तद्द्वयेति।

५१ ननु विषयभेदादेकमनेकं चेति यदुक्तं तत् केन ग्रहीतव्यं चाक्षुषानुभवेन तावत् चैत्रो देशभेदभिन्न एव निर्भासते नास्याभासभेदमिश्रीकरणसामर्थ्यमविचारकत्वादिति हि आहुः, विकल्पेन तु मानसेन वस्तु नैव स्पृश्यते तदेव उच्यते सूत्रेण 'तद्द्वयालम्बना' इति, इह यद्यपि विकल्पेपि सन्निति वा घट इति वा सत्तामात्रघटमात्रावभासादौ सामान्यादेराभासो विततग्रहणे च योगिनः कर्मावभासः कालावभास इत्युच्येतापि तथापि तत् सामान्यादि निजं जीवितं न प्रतिलभते, तथाहि समानोपरञ्जकतासंबन्धिभेदोद्रेकः संतन्यमानक्षणभेदैक्यग्रहोऽवयवराशीकरणमवध्यवधिमद्भावावभास इति सामान्यसंबन्धक्रियाद्रव्यदिगाभासानां जीवितं, तच्च विकल्पने स्फुटमभिव्यज्यते विकल्पनं च मनसोऽनुव्यवसायं यदवसरे मायाप्रमातुरभिव्यक्तिः तेन मनः कर्तृ अनुव्यवसायसाक्षात्कारविमर्शस्य पश्चाद्भाविनं विमर्शं विदधत् क्रियासंबन्धादिविषयाः कल्पना विकल्पज्ञानानि स्वतन्त्रप्रमातृव्यापारप्राधान्येन करोति, तदुक्तपूर्वं द्वयमेकानेकलक्षणमालम्बनं यासां तादृशीः तेन विकल्पधियैव एकानेकात्मकरूपद्वयस्पर्शः न तु वस्तुस्पृक् विकल्पः, प्रमातुः किलायं व्यापारः, प्रमाता च पूर्वानुभवान्तःस्वसंवेदनरूपो विकल्पनेऽपि पूर्वात्मतां नोज्झति तस्य तु मायीयताव्यक्तौ मनोनुव्यवसाय एवाव-

इह 'ज्ञानमालाया अन्तःसूत्रकल्पः स्वसंवेदनात्मा प्रमाता जीवितभूतः' इति उपपादितं प्राक्[52], स च 'स्वतन्त्र' इत्यपि निर्णीतम्, स तु विशुद्धस्वभावः शिवात्मा, मायापदे तु संकुचितस्वभावः पशुः, तदस्य मनःसमुल्लासावसरे विकल्पभूमिकायां स्फुट उल्लासः, [53]ऐन्द्रियके निर्विकल्पके सदाशिवेश्वरदशाभ्युदयात्, अविकल्पकबोधाबहिर्भूतविमर्श[54]व्यापारस्य पश्चाद्भाविनं व्यवसायं निश्चयात्मकं विकल्पकम् अनुव्यवसायशब्दवाच्यं विदधदन्तःकरणम् एतान् क्रियासंबन्धादिविकल्पान् संपादयति, ते च विकल्पाः तद्द्वयम् एकत्वानेकत्वरूपम् अवलम्बन्ते, नहि विकल्पेषु प्रतिभासमानम् अवस्तु तत्—इति हि उक्तम् 'प्रकाशतैव वस्तुत्वम्' इति, न च विकल्पस्य

सरः, तत्रैव च व्यावहारिकं क्रियासंबन्धादि न शिवतादशायां, नापि सदाशिवादिभूमौ निर्विकल्पककाले च सदाशिवादिरूपसमुदय इति सूत्रस्य तात्पर्यम् ।

५२ प्रागिति ज्ञानाधिकारे द्वितीयाह्निके ।

५३ चक्षुरादिसमुल्लासे कथं नेत्यत आह ऐन्द्रियक इति ।

५४ साक्षात्कारात्मा विमर्शः ।

प्रकाशरूपतां मुक्त्वा आरोपणाध्यवसायाभिमानादिनामधेयं व्यापारान्तरं युक्तम्, ततो[५५]ऽबाह्यं बाह्यम् आरोपयन्ति इत्यादि वचो वस्तुशून्यम्, तच्च एतत् उक्तम्

'भ्रान्तित्वे चावसायस्य ………………… ।'

इत्यत्र । अथ ब्रूयात्—परो यत् इन्द्रियज्ञानेन प्रकाशनीयं स्वलक्षणं[५६] तत् कथं विकल्पः स्पृशेदिति, भवेदेवं—यदि विकल्पो नाम स्वतन्त्रो भवेत्, यावता प्रमातुरसौ व्यापारः प्रमाता च पूर्वानुभवान्तःस्वसंवेदनरूपः तदस्य च अयमेव पूर्वानुभवसंस्कारो—यत् विकल्पनव्यापारकालेऽपि पूर्वानुभवात्मत्वम् अनुज्झन्नेव आस्ते, ततः पूर्वानुभवो यावत् स्वलक्षणप्रकाशनात्मा तावत् पूर्वानुभवतादात्म्याप-

---

५५ तत इति अबाह्य इति स्वात्मा उल्लेखश्च पदार्थस्य स्वरूपमित्येतत् द्वयमप्यबाह्यं प्रकाशनसंभवात्, प्रकाशनयोगं च स्पृशताध्यवसायेन विकल्पनादियोगेन बाह्यमारोपयन्तीति हि रिक्तं यतोऽत्र प्रकाशनसंश्लेषं स्पृशता विकल्पेनाबाह्य एव प्रख्योपाख्यानवता व्यवस्थाजनकेन भूयते न बाह्ये इति ।

५६ स्वलक्षणमिति निर्विकल्पकम् ।

न्नप्रमातृतत्त्वव्यापारोऽपि विकल्पस्तद्विषय[५७] एव, अत एवमुक्तम् आचार्येण

'पूर्वानुभवसंस्कारः प्रमातुरयमेव सः ।
यदपोहनकाले[५८]ऽपि स पूर्वानुभवः स्थितः ॥'

इति, तस्मात् प्रमातुः यो व्यापार एकत्वानेकत्वसंयोजनात्मा स एव प्रकृतो यत्र तादृशीः क्रियादिकल्पना एकानेक[५९]वस्तुविषया 'एता' इति ग्रहण[६०]कवाक्यसूचिता मन एव करोति इति स्थितम्[६१], यद्यपि अविकल्पे[६२]ऽपि सामान्याद्यवभासो घटमात्रावभासादौ, तथापि न तदा सामान्यादि स्फुटं — समानोपरञ्जकत्वे संबन्धिद्वयोद्भवे क्रमिकक्षणसंतानात्यागे अ-

---

५७ तदिति पूर्वानुभवविषय एव ।

५८ विकल्पनावसरेऽपि ।

५९ एकेति, समानानां यदेकं भाति तत्सामान्यमिति ।

६० क्रियासंबन्धेत्यादि ।

६१ भेदोद्रेके चाक्षुषानुभवे इति योज्यम् ।

६२ अयमत्राशयः — प्रमाता च बाह्यमान्तरं च विकल्प्यं विषयं यदध्यवस्यति विचित्राभिर्योजनाभिस्तदोच्यते क्रियासामान्यादि । अत्राहुर्बौद्धाः — अनुभवविकल्पनात्मकसंवेदनसंततिमात्रमेव हि अन्तस्तत्त्वं, संस्कारादेवाभीष्टसिद्धिरिति, तदयुक्तं — प्रमात्रेकतापर्यवसायी हि संस्कारः ततश्चेह ज्ञानमालाया अन्तःसूत्रकल्पः स्वसंवेदनात्मा प्रमाता जीवितभूतः, इत्युपपादितं प्रागिति प्रागेवोक्तम् ।

वयवकदम्बकस्वीकारे अवध्यवधिमत्परिग्रहादौ सामान्यसंबन्धक्रियाद्रव्यदिगादिपदार्थस्य परमार्थतः स्फुरणात्, इति 'मानसविकल्पग्राह्या एकानेकरूपाः सामान्यादय' इति स्थितम्। एवं च संवृतिः विकल्पबुद्धिः, तद्वशात् उच्यतां संवृतिसत्यत्वं सत्यत्वस्यैव तु प्रकारः तत्, इति द्विचन्द्रादिवत् न असत्यता ॥ ३ ॥

तत्र[६३] च अयं संविद्वतरणक्रमो—यत् क्रिया[६४]शक्तेरेव अयं सर्वो विस्फारः, तत्रापि संबन्ध एव मूलभूतः[६५], तथाहि—समानानां यत् एकं

---

६३ तत्रेति क्रियादिषु संवृतिसत्यत्वे द्विचन्द्रादिवदसत्यत्वे निराकृते सति।

६४ स्वातन्त्र्यामर्शरूपायाः क्रियाशक्तेरेवायं बाह्यक्रियासंबन्धसामान्यादिः विजृम्भितम्।

६५ अनेकैकरूपतालक्षणः संबन्धः पारमार्थिकं स्वरूपम् तात्त्विकं स्वरूपं संबन्धलक्षणमेषामुक्त्वा असाधारणरूपान्तरयोगेन नामान्तरमाह तथाहीति अनेकव्यक्तिग्रामस्य य ऐक्यात्मा संबन्धः इति संबन्ध एव मूलभूतः तत्रैव गाव इति समानानां व्यक्तीनां गाव इति व्यपदेशान्तरसहिष्णुत्वे सामान्यं देवदत्तेत्यनेकक्षणप्रवाहे आश्रयबलादेकीभवति स्पन्दते इति व्यवहारबलात् क्रियाव्यपदेशः इत्यत्रापि संबन्ध एव जीवितम् अवयवानामैक्यमिति संबन्ध एव जीवितं पट इत्यादिद्रव्यव्यवहारः बालाद्यवस्थानामैक्येऽवस्थातृव्यवहारः एवमत्र व्यपदेशान्तरग्रन्थिबन्ध्यतायां निर्विशेषैव संबन्धप्रतीतिः, प्रातिपदिकार्थात् तु यदतिरिक्तं तत्संबन्ध एव सर्वम्।

भाति तत् सामान्यम्, देवदत्तस्य यत् वैतत्यं सा क्रिया, अवयवानां यदैक्यं वैतत्यं च देशतः सोऽवयवी, इमम् अवधिं कृत्वा अयम् इत्थम् ततोऽस्य अयं पुरस्तात् इत्यादिर्दिक्, अस्यायं क्रियाप्रतानः सहभावेन[६६] आस्ते विनाभावेन वा इति वर्तमानादिः कालः, यावत् हि प्रातिपदिकार्थस्य पृष्ठपाति वपुः भाति तदतिरिक्तं सर्वं संबन्ध एव इति कारकाणामपि संबन्धरूपतैव, केवलं क्वचित् असौ संबन्धो व्यपदेशान्तरग्रन्थिं सहते, यथा सास्नादिमतां संबन्धो 'गाव' इति एकव्यपदेशसहिष्णुः तत्र सामान्यादिव्यवहारः, व्यपदेशान्तरग्रन्थिभङ्गे[६७] तु संबन्धवाचोयुक्तिरेव, अत एव मुष्टिप्रस्थपलादिप्रमाणपरिमाणोन्मानरूपं[६८]

---

६६ सहभावेनेति वर्तमाने विनाभावेनेति भूते भविष्यति च यथा तन्तूनामैक्ये पटोऽयमिति द्रव्यव्यवहारः ।

६७ गाव इति व्यपदेशान्तरस्यैव ग्रन्थेर्भङ्गे ।

६८ यदाहुः,

'ऊर्ध्वमानं किलोन्मानं परिमाणं तु सर्वतः ।
आयामस्तु प्रमाणं स्यात् संख्या बाह्या तु सर्वतः ॥'

इति ।

तत्र अन्तर्गतं वा अणुमहदादि संख्यापृथक्त्वादि च यत् तत् सर्वं संबन्धस्यैव विजृम्भितम्, येऽपि [६९]सामान्यादि वस्त्वन्तरम् अमंसत तेऽपि तत्र समवायम् अभ्युपजग्मुः जीवितत्वे[७०]नं, समवायश्च संबन्धात्मा तदनुग्राह्यो वा केषांचित्, यत आहुः

'तां शक्तिं समवायाख्यामनुगृह्णाति संबन्धः ।'

[७१]इति, यदपि च [७२]कारकं तदपि क्रियामुखप्रेक्षि, सापि कालं प्राणेश्वरम् आश्रयति, सोऽपि क्रियाद्वारेण सर्वभावान्, सापि संबन्धम् उद्धुरयति इति संबन्धाधीनैव इयं चित्रा लोकयात्रा, तदाह आचार्य एव

'भेदाभेदात्मसंबन्धसहसर्वार्थसाधिता ।
लोकयात्राकृतिर्यस्य स्वेच्छया ............ ॥'

---

६९ द्रव्यगुणकर्मसामान्यसंबन्धविशेषाख्याः षट् पदार्था इति तार्किकाः ।

७० सामान्यतद्वदादेः संबन्धः समवायोऽस्ति इति ।

७१ अयमत्राशयः—भिन्नसामान्यादिवादिभिरपि समवायस्य संबन्धस्य अनुगृह्णाति संबन्ध इति नीत्या संबन्धस्यानुगृहीतस्याङ्गीकरणात् संबन्धश्चैकानेकतामयः प्रमातृस्वातन्त्र्यात्मकक्रियाशक्तिमहिम्ना ततः संबन्ध एव प्रमात्रैक्यसिद्धौ मूलम् 'संबन्धे सावधनता' इत्युक्तेः, ततस्तमेव विचारयितुं सूत्रम् ।

७२ कारकमिति कर्मादि ।

इति, अतः संबन्धमेव प्रथमं निरूपयितुम् आह

[७३] स्वात्मनिष्ठा विविक्ताभा
भावा एकप्रमातरि ।
अन्योन्यान्वयरूपैक्य-
युजः संबन्धधीपदम् ॥ ४ ॥

राजा पुरुषश्च बहिस्तटस्थौ स्वात्मैकपरिसमाप्तौ प्रमातृभूमौ यदैक्यं गच्छतः, न च ऐक्यमात्रं — तयोः भेदविगलनापत्तेः, अपि तु परस्पररूपश्लेषात्मकं युगपदेव निमज्जदुन्मज्जद्भेदाभेदकोटिद्वयदोलारोहणलक्षणम् अन्वयरूपं, तदा तावेव संबन्धधिय आलम्बनं भवतो

७३ स्वात्मनिष्ठा इति—राजा पुरुषश्च विविक्तत्वेन यतो बहिर्निर्भासते ततः स्वात्मन्येव समाप्तौ तथाविधावेव यदा एकस्मिन् प्रमातरि ऐक्यं भजतः तच्च नैक्यमात्रं स्वरूपविगलने संबन्धायोगात् किं तु परस्परस्वरूपश्लेषसमकालोन्मज्जन्निमज्जद्भेदाभेदकोटिदोलायन्त्ररूपसमन्वयलक्षणं तच्चापि न प्रमात्रैव सह अपि तु राज्ञः पुरुषः, यदि वा तस्य राजेति केवलं तद्भावगमने संवित्स्पर्श एषामुपायमात्रत्वेनाङ्गीक्रियते कनकपृषत्मेलनेऽग्निरिव स्वरूपमलुम्पन्नेव तादृशेनानेन ऐक्येन युज्यमानौ तौ भावौ संबन्धबुद्धेः राज्ञः पुरुष इत्यादिकायाः पदं विषयः, सर्वत्र द्विष्ठ एव संबन्धो यद्यपि कथितनयेन तथापि संबन्धव्यक्तीनामानन्त्यमभिधातुं बहुवचनमिति सूत्रार्थः ।

'राज्ञः पुरुष'[७४] इति, तथाहि—राजा यदा पूर्वं धिया गृहीतोऽपि न स्वात्मविश्रान्त्यां[७५] तुष्यति तदा रूपान्तरेण पुंसा श्लेषं भजन् कृतार्थीभवति पुरुषोऽप्येवं, स च एष रूपश्लेष एक-एव उभयोः चिदात्मनि तथा अवस्थानरूपः[७६] पूर्वप्रतिलब्धसंवित्प्रतिष्ठे तत एव अधिकसंविन्निमज्जनात्[७७] अनाभासमानपृथग्भवनलक्षणस्वातन्त्र्ये विश्राम्यति, इति तत्रैव निर्भासते समास्कन्दितपुरुषपरमार्थोऽपि, एवं बहिरनेकता, अन्तस्तु परस्परूपश्लेषेणैक्यम्, इति संबन्धस्य रूपम् ॥ ४ ॥

---

७४ अयमत्र भावः—मनसापि चाक्षुषमेवावमृश्यते यतः अत एव न राजपुरुषयोरेकपिण्डीभावेनैक्यमेव नापि बहिरिव तटस्थतया भेद एव भाति अपि त्वेषैव सा संबन्धप्रतीतिः येयं भेदाभेदप्रथा संबन्धिनोः सापि बाह्यान्तरतयोपपन्ना न तु विरुध्यते विमर्शबलात् तच्चान्वयरूपं न प्रमात्रैव सहेत्याह राज्ञः पुरुष इति ।

७५ अयमत्र भावार्थः—तच्च प्रमात्रैक्यं वास्तवं विशेषणविशेष्ययोः राज्ञः पुरुषः पुरुषस्य राजा, नीलं चोत्पलं च तत् धवश्च खदिरश्च ततोऽन्यः इत्यादि प्रकारवैचित्र्येणावस्थितयोः विशेषणस्यात्यक्तभेदस्यैव विशेषस्यान्तःप्रवेशात् तदात्मतापत्तिमयैकभावेन परिणतं परिहृतविरुद्धधर्माध्यासदूषणं तथापि प्रमेयतयापि निर्मितमवभासते इति ।

७६ न निरपेक्षीभवति ।

७७ एकस्यैवोदयात् ।

ज्ञातिद्रव्यावभासानां
बहिरप्येकरूपताम् ।
व्यक्त्येकदेशभेदं चा-
प्यालम्बन्ते विकल्पनाः ॥५॥

जात्यवभासस्य—अवभासमानरूपायाः जा-
तेः ग्राहिकायाः कल्पनाः, ता न केवलं संव-

७८ अथ संबन्धानुग्रहादैक्यानैक्यमयत्वेपि यथा वैलक्षण्यं जात्याद्यवभासानां तथा भेदान्तरमभिधातुं प्रक्रमते—जातीति, जात्यवभासानामाभासपरमार्थानां जातीनां या ग्राहिका विमर्शिकाश्च कल्पना विकल्पबुद्धयस्ता न केवलमन्तरैक्यं बहिश्चानैक्यमेव विषययन्ति यावद्बहिरपि एकगोत्वानुगमादैक्यम् एकप्रातिपदिकप्रयोगप्रयोजनं बहुवचनप्रयोगोपयोगिनं चाश्रयभूतव्यक्तिपरिग्रहावश्यंभाविनं व्यक्तिगतं भेदमालम्बन्ते प्रकाशयन्ति विमृशन्ति च इमा गाव इति बहिर्मुखतयैवाभेदस्य विशेषणतया भेदस्य विशेष्यत्वेनोपरञ्जनीयतया प्रतीतेः । एवं द्रव्यावभासानां कल्पना बहिरपि एकतामवयवभेदं चालम्बन्ते घट इति निःसन्धिबन्धनतया एकस्य वैतत्येन चानेकावयवस्य प्रतिपत्तिर्यतः आभाससारतया च चित्रसंवेदनवत् न विरोधः कश्चित् रक्तारक्तादिभेदेपीति सूत्रार्थः । व्यक्त्येकदेशेति व्यक्तिभेदो जातेः, एकदेशभेदो द्रव्यस्येति । ननु कथमुक्तम्—आलम्बन्ते विकल्पना इति, चाक्षुषावभासेऽपि हि सामान्यसंपृक्तस्वलक्षणावभासतास्त्येव अवयव्याभासोऽपि चैकघनविततकारावभासरूपोऽत्र चास्त्येव, सत्यमस्त्येव तथापि देशकालाभाससंपर्कस्फुटीभावेन स्वलक्षणताप्राधान्यावस्थितेर्विशेषणत्वानुद्रमाच्च सामान्यतानभिव्यक्तेर्विकल्पमतिरेव तद्विषयोक्ता, चैत्र इत्यादिद्रव्येऽपि बालाद्यवस्थाभेदितावयवरूपाविष्ट एकोऽर्थविकल्पबुद्ध्या स्फुटावयविलक्षणः प्रतीयते इति तद्विषयतोक्तेति ।

न्धवत् अन्तर् एकरूपतां बहिश्च अनेकरूपताम् आलम्बन्ते, यावत् बहिरपि व्यक्तिभेदलक्षणम् अनैक्यं बहिरेव च तद[79]नुस्यूततारूपाम् एकताम् आलम्बनत्वं नयन्ति, 'गाव' इति हि प्रतिभासे पृथक् च ता बहिर् व्यक्तयो भान्ति, येन च बहुवचनम्, अनुयायि च आसां भाति वपुः यत एकप्रातिपदिकार्थपरामर्शानुगमः[80], उभयं च[81] तद्बहिरेव 'इमा' इति अङ्गुल्या निर्देशात्, केवलं बाह्यत्वमपि स्थिते परमार्थप्रकाशान्तर्भावे, इति न तत्र भेदाभेदौ दूषणं – चित्रसंवेदन इव, अनेन द्रव्येऽपि रक्तारक्तादिविरोधः कृतप्रतिविधानः, आन्तरं तु ऐक्यं संबन्धद्वारेण तद्वदेव सर्वत्र, एवम् अव-

---

७९ तदनुस्यूतेति गोत्वानुगमात् ।

८० अयमत्राशयः – सामान्यबुद्धिः सकृदेकैव च प्रवर्तमाना सामान्योपसर्जनं स्वलक्षणभेदमवभासयति नहि सामान्यं नामासहायमवभासते सामान्यं तत्संभवेत् यथा हि चक्षुषो गोमात्रावभासोऽप्यस्ति देशकालाद्याभासासंपृक्तो यदा स्वात्मन्यपि प्रमातुः सामान्यप्रथायामवधानं स्वापेक्षयार्थानां देशादिप्रतीतेः न च सामान्यविषये समानानां हि भावः सामान्यं न तु किंचित् स्वतन्त्रं वस्तु, स कथं निराश्रयोऽवभासेत देशकालसंनिवेशाद्यवभाससंभेदेपि चाक्षुषावस्थायामेकस्वलक्षणतैव ।

८१ उभयमित्येकत्वानेकत्वे, बहिर्मुखतयैवाभेदस्य विशेषणतया, भेदस्य च विशेष्यत्वेनोपरञ्जनीयतया प्रतीतेः ।

भासमानस्य घट इति अवयविद्रव्यस्य ग्राहिका याः कल्पनाः ता न केवलं संबन्धवत् अन्तर्बहीरूपतया एकानेकविषया यावत् बहिरप्येकं निःसंधिर्[२]बन्धरूपत्वेन भिन्नं च अवयवलक्षणैकदेशद्वारेण स्वीकुर्वते, घट इति हि निःसन्धिबन्धनैकघनात्मा विततरूपश्च भाति इति ॥ ५ ॥

क्रियाविमर्शविषयः
कारकाणां समन्वयः ।
अवध्यवधिमद्भावा-
न्वयालम्बा दिग्[३]ादिधीः ॥६॥

---

८२ ऐक्यरूपेण ।

८३ क्रियाकारकसंबन्धेऽपि भेदाभेदौ विमृश्येते सूत्रेण तत्प्रसङ्गेन च दिगादिस्वरूपं – क्रियाविमर्शेति, शक्त्याधाराणां द्रव्याणां यः समन्वयः स संश्लेषकजतुस्थानीयक्रियापरामर्शनिमित्तकः यथा प्रमाणप्रमेययोः प्रमानिमित्तकः प्रमा च प्रमातृविश्रान्तेति कर्तरि चिद्रूपे यदभेदगमनं भिन्नानामपि कारकाणां स एव समन्वयः, एवं काष्ठस्थाल्यादीनां वाच्यम्, एवं कारकशक्तीनामपि समन्वयः – कर्तृविश्रान्तिपर्यन्त एव क्रियामुखेन तदुल्लासात्, क्रियायाश्च कर्तरि विश्रमणात्, एवं क्रियायाः स्वलक्षणापेक्षयाद्यकारकापेक्षया च यो भेदो यश्चैककर्तृविश्रान्त्या फलैक्येन चाभेदः स एव समस्तसंबन्धजीवितभूतः, अस्मादिदं परमपरमिति च या दिक्कालबुद्धिः सापि अवधिमवधिमन्तं च भिन्नमेव सन्तमन्तरभेदपूर्वकं भेदावमर्शनमध्यमभेदप-

कारकाणां[८४] कर्त्रादिशक्त्याधाराणां द्रव्याणां च योऽन्योन्यं समन्वयो दृश्यते, यथा मातृमेयमानानां मिथः[८५], सोऽन्तर्लीनप्रमात्मकक्रियाविशेषपरामर्शैकनिमित्तकः; नहि प्रमापरामर्शम् अन्तर्वर्तिनं विहाय वस्तुनः[८६] साक्षात् अन्वयोऽत्र संवेद्यते, अनन्यत्र भावरूपतानिमित्तता[८७] अत्र विषयार्थः, कारकशक्तीनामपि[८८] यः स्वाश्रयैः संबन्धः[८९] सोऽपि क्रियापरामर्शनि-

---

र्यन्ततया मेलयन्ती संबन्धरूपत्वप्रधानैव, तत्रापि च चेतनस्य या परामर्शक्रिया सैव विजृम्भते इति क्रियाशक्तेर्भगवत्या अयं सर्वः स्फार इति तात्पर्यम् इति सूत्रार्थः, तदित्थं—क्रिया तावत्कर्तृधर्मः, कर्ता च चिद्रूप एवोपपद्यते—अन्यस्य स्वातन्त्र्यायोगात् इति प्रागेवोक्तं, चिद्रूपश्च प्रमातैवेति क्रियामुखेन कारकाणामेककर्तृनिष्ठैव कारकतोपपत्तिः पूर्वादिदिग्देशकालव्यवस्थापि पराद्यवधिसंबन्धरूपात् प्राग्वदेकानेकविषयैवेति सूत्रेण कथयति क्रियेति ।

८४ कारकमित्यत्र द्रव्यं शक्तिश्च, तत्र कर्त्रादयः—काष्ठस्थालीदेवदत्तौदनानि ।

८५ अन्वय इति शेषः ।

८६ वस्तुन इति मात्रादिरूपस्य । अत्रेति प्रमातृप्रमेयादिव्यवहारे । प्रमातृविश्रान्तता प्रमा इति चिद्रूपे कर्तरि यदभेदगमनं तदेवैषां समन्वय इत्यर्थः ।

८७ तां प्रमाशक्तिरूपां क्रियाशक्तिं विहायान्यत्रैषां भावो नास्तीति । अत्रेति क्रियाविमर्शविषय इति विषयविभागः ।

८८ अपरथा व्याचष्टे कारकेति ।

८९ संश्लेषकजतुस्थानीयः, तदयमर्थः—काष्ठैः स्थाल्यामोदनं पचति

मित्तकः, द्र[९०]व्याणां च शक्तीनां च क्रियया साकं साक्षात् संबन्धः, इति इयं क्रियैव भगवती एतावद्विजृम्भितं संबन्धम् आविर्भावयति [९१]अस्मादिदं पूर्वं परं दूरे इत्येवं बहिर्भिन्नतया परामृश्यमानयोः भावयोरन्तर् अभेदपूर्वकं भेदावमर्शमध्यम्[९२] अभेदविश्रान्तं च यत् रूपम् [९३]आमृश्यते तत् दिग् इत्युच्यते, अत्र हि [९४]तयोः मुखाद्यवयवविशेष-

---

चैत्र इति वाक्यगम्यो योऽर्थः स तत्त्वतः क्रिया, तत एवाख्यातशब्दो वाक्यमित्युच्यतेऽत्रभवता तत्र च काष्ठगतं ज्वलनादि स्थालीगतं संतपनादि तण्डुलगतं विचटनादि च यत् तत्पाकरूपम्—इत्येवं भेदेनामर्शे स्फुरत्यपि चैत्रचेतनस्वातन्त्र्यविश्रान्त्यामभेद एव पर्यवस्यतीति, क्रियायास्तावद्भेदाभेदौ कारकमुखेन भेदरूपत्वमाह कारकवार्तिके 'विभक्तं पचेः स्वरूपं कारकभेदेन तद्बुद्धेरिति' क्रियाबुद्धेः अथाभेदोऽपि पचतीत्यमुत्र परामर्शे क्रियाबुद्धेरभिन्नविषयता यत एतद्रूपः पाकस्वातन्त्र्यमयो यः कर्ता तदेकाविष्टतया सा क्रिया तया बुद्ध्या विषयीक्रियते तस्य च कर्तुरेकरूपत्वं परमार्थः ।

९० द्रव्याणामिति काष्ठादीनाम् ।

९१ दिग्देशकाला विमृश्यमाना आन्तरमेकत्वमाश्रयन्ते यतः संबन्धक्रिययैव विषयीक्रियन्ते द्वितीयसंबन्ध्यपेक्षया पूर्वापरत्वेन व्यवतिष्ठन्ते ।

९२ सापेक्षत्वात्, अभेदेति—अवध्यवधिमतोरुभयोः सद्भावात् ।

९३ अनेन चेतनस्यैव या परामर्शक्रिया सैव तत्र विजृम्भते इत्युक्तं भवति ।

९४ तयोरिति भावयोः ।

परामर्शादरः तत्संमुखत्वपराङ्मुखत्वादिनिश्चयः संयोगे[९५]संयुक्तसंयोगाल्पतादिपरिग्रहश्च उपयोगी, [९६]कालपरामर्शस्य पूर्वपरादिरूपत्वे जन्मास्थित्यल्पतादिविमर्शश्चिराक्षिप्रादिरूपत्वे च, पक्ष्यति पचति अपाक्षीत् इत्यादौ तु संभावितस्य स्फुटस्य स्फुटभूतपूर्वस्य आत्मीयसंवेदनस्पन्दितप्राणादित्यादिक्रियान्तरस्य फलविशेषस्य च ओदनादेः परामर्श उपयुज्यते, [९७]एवं संख्यापरिमाणपृथक्त्वसंयोगविभागप्रभृ-

---

९५ अयमस्मादल्पतरसंयुक्तसंयोगवानित्येवंप्रकारेण ।

९६ यतो देशः कालश्च विमृश्यते ततः सर्वथैते दिगादयो विमृश्यमानपूर्वापररूपत्वेन व्यवतिष्ठन्ते उत बहिर्भिन्नविषया आन्तरमभेदमाश्रयन्ते इति ।

९७ न चेत्थमत्र वाच्यं—भेदाभेदतया सर्वत्र समानतेति को भेदः संख्यादीनामिति, यतोऽत्र नैकरसतया सर्वत्राभासानां प्रमातृविश्रमगमनमपि प्रमातुः स्वातन्त्र्यादनन्तकल्पेन वैचित्र्येणेति, एवं संख्येति संख्यायमान एवार्थः संख्या परस्परव्यवच्छेदने यदा प्रतीयते न च व्यावृत्तिमात्ररूपतया नीलानीलवत् अपि तु परस्परापेक्षया, न च तयैव केवलया इतरेतरयोगप्रतीतिवत् अपि तु परस्परव्यवच्छेदकत्वेनेति, ततश्चेदमुक्तं भवति—इह भावाभासे यदाभासान्तराशंकाशमनं कर्तव्यं भवति तदाभासान्तरेण निराक्रियमाणेनावच्छिद्यमानो भाव एक इत्युच्यते, तत एवैकवचनात् शब्दसंस्कारमात्रेणापि चरितार्थीकर्तुंशक्यादेकशब्देन अभिधाने विशेषः प्रतीयते एकः शिवोऽस्माकं शरणमिति । एवमर्थान्तरावच्छेदेनैवेदमर्थान्तरमिह कार्यमिति द्वित्वसंख्या—द्वौ पुरुषाविति, तत्र नान्यः प्रवेशं लभते इति प्रतीतिः, द्वावपूपौ भुक्तावित्यन्याप्रवेशः कथंचिदपि न तत्परिवर्जनं तेन

तिषु संबन्धरूपतैव वाच्या, सर्वथा अयं संक्षेपः, यत्र पदार्थाभासस्य आत्मविश्रान्त्या संतोषमपुष्यतः आभासान्तरपरामर्शविश्रान्तिसाकाङ्क्षतया स्वरूपनिष्ठा तत्र संबन्धरूपतैव क्रियाशक्तिविजृम्भामयी, तत्रापि भावान्तरापेक्षया संबन्धान्तरमपि अस्तु, यथा संख्यादौ समवायं मन्यन्ते, न च अनवस्था भवन्ती अपि दोषाय, पूर्वापरकल्पस्रष्ट्यनवस्थेव, नहि उत्तरसंबन्धस्रष्ट्या विना पूर्वसंबन्धावभासे हानिः काचित् येन मूले क्षतिः शंक्येत ॥ ६ ॥

एवं [९८] सकललोकयात्रानुप्राणितकल्पानल्प-

---

विना नान्यस्य तत्क्रियोपयोगः, इत्येवमाभासान् मेलयति प्रमाता, एवं त्रय इत्यादौ परार्धान्ते, परस्परावच्छेदेन तदुपयोगो बहुशाखो मन्तव्यः तत उच्यते न विना संख्यया कश्चित्सत्त्वभूतोऽर्थ उच्यते इति। परिमाणमपि अणुमहद्ध्रस्वदीर्घाख्यमिति तदपि परिच्छिन्नवस्त्वन्तरापेक्षमिति परिमाणमप्यान्तैरक्यभागेव परिमेयस्य वस्त्रस्यापेक्षमाणेन हस्तेन समन्वयगमनादिति । पृथक्त्वमपि भेदग्रहणपूर्वकमन्तःशङ्क्यमानाभेदमध्यं भेदाभासरूपं तदेव संख्यावच्छिन्नमेकपृथक्त्वादि परार्धपृथक्त्वान्तम् । संयोगोपि अश्लिष्टरूपयोः श्लिष्टतारूपः । विभागोपि श्लेषाभासपूर्वको नेति य आभासः यतो विविक्तता भासते। प्रभृतिग्रहणेन परत्वापरत्वेतरेतरयोगद्वन्द्वपदार्थधर्मसमुच्चयग्रहणमिति ।

९८ तदित्थमस्य विश्वस्य संबन्ध एव जीवितमिति स्थितमित्याह सकलेत्यादि ।

संबन्धबन्धुरीभावभावं क्रियाशक्तिविजृम्भात्मकम् अभिधाय, तस्य स्थैर्योपयोगौ पूर्वसूचितौ निरूपयितुमाह

९९
एवमेवार्थसिद्धिः स्या-
न्मातुरर्थक्रियार्थिनः ।
भेदाभेदवतार्थेन
तेन न भ्रान्तिरीदृशी ॥ ७ ॥

इह भावानां न सत्तासंबन्धः, सत्त्वम्—अ-

९९ तत्र सत्तासंबन्धः सत्त्वमित्यव्याप्त्यनवस्थाव्यर्थतोपहतम्, अर्थक्रियेति तु व्यधिकरणं तत्कारणत्वं न सदातनं, ज्ञानजननेन तथात्वं सदातनमित्यपि न युक्तम्—अङ्कुर इव बीजस्य स्वज्ञाने जनितव्याभिमतेऽन्वयव्यतिरेकग्रहणभावेन कारणत्वानिश्चयात्, अर्थक्रियाकरणयोग्यत्वं सत्यासत्ययोः दुरवधारम् अर्थक्रियान्तरेणानवस्था सर्वस्य चास्याप्रकाशे शशशृङ्गसदृशतेति प्रकाशमानतैवानुन्मूल्यमानविमर्शा सत्त्वम्, सा च संबन्धादीनामनाशङ्क्यैवेति स्थितेऽपि यदि दुर्ग्रहात् कश्चिदाचक्षीत लोकस्तावदर्थक्रियामभिलष्यति सा किं संबन्धादीनामस्ति इति स्थैर्योपयोगाभ्यां तत्समर्थनेन विमनस्कमाश्वासयति—एवमेवेति, यदि सत्यं प्रत्येषि तत् भेदाभेदमयेन संबन्धेन विना न काचित् व्यवहारभूमावर्थक्रिया यत्रापि स न संवेद्यते तत्राप्यवश्यमन्तः स्फुरन्नेवास्ते, तथाहि—सुखाद्यर्थयमान एवमर्थयते यदि तज्जानीयात् एवं च जानीयात् यदि तदेव तत् स्यात् तथापि चानर्थनीयं भवेत् तस्य निष्पादात्, अत इदमापतितमनतिलङ्घनीयं—यत् तदतद्रूपयोर्भेदाभेदमयता संबन्धसामान्यादिरूपेति, एतच्च यद्यसत्यं किमिदानीं सत्यमुच्यते, तेन योऽत्र भ्रान्तिव्यवहारं करोति स एव परं भ्रान्तः तद्ग्रहणकसूत्रितौ स्थिरत्वोपयोगौ युक्तावेवात्रेति सूत्रार्थः ।

[100] व्यापकत्वात् अनवस्थावैयर्थ्यादिदोषात्,
अर्थक्रिया[101] – वस्त्वन्तरत्वात्, न तत्कारित्व
सर्वदा तदावेशादर्शनात्, उक्तं हि

'अर्थक्रियापि सहजा नार्थानाम्‌……… ॥'

इति, तत्कारित्वस्य च प्रत्यक्षानुपलम्भा

---

१०० अव्याप्यवृत्तिः संबन्धः । सत्तासंबन्धस्तु भावानां व्यापको न भवति, ततः सत्तासंबन्धात् पूर्वं भावाः सन्तोऽसन्तो वा? यद्यसन्तः तदासत्त्वाविशेषाच्छशशृङ्गादिष्वपि सत्त्वं स्यात्, न च तत्र सत्त्वमित्यव्यापकत्वं, यदि सन्तः तदा अनवस्थावैयर्थ्यादिदोषप्रसङ्गः ।

१०१ न तावदर्थक्रिया सत्त्वम् अर्थक्रियापि एका सत्त्वमप्येकमित्यनयोः परस्परस्वरूपसत्त्वात् व्यधिकरणत्वेन वस्त्वन्तरमिति कथं सामानाधिकरण्यमर्थक्रियासत्त्वमिति अत्राह – नोच्यतेऽर्थक्रियासत्त्वमिति, किं तु अर्थक्रियाकारित्वं हेयोपादेयतापादनेन सत्त्वमर्थस्य सप्रयोजनं करोतीति ह्यौपाधिकं स्वरूपमर्थक्रियाकारित्वं सत्त्वमुच्यते, तदुन्मूलयति – सर्वदेत्यादिना, जातुचिद्धि सहकार्यसंनिधेरर्थक्रियापि भावस्य न भवेदित्यर्थक्रियाकारित्वाभावे तदानीं सत्ता कथं संभवेत्, अथोच्यते – कारित्वमिति लक्षणसमीपवृत्तित्वेन उपलक्षणपरं तद्यथा काको देवदत्तगृहोपलक्षणं तत्र गृहे वक्रकोटराद्यभिचारं प्रदर्शयन् तदुपलक्षणं भवति तथार्थक्रियापि तत्सामर्थ्यलक्षणं रूपान्तरमव्यभिचारं प्रदर्शयतीति अत्राह – उक्तं हीति, अयं भावः – अर्थक्रियाविशिष्टतायामेव तत्सामर्थ्यस्योपलक्षणं यथा जलं पानस्नानादिकालेऽपि न जलत्वादधिकेन रूपेण लक्ष्यते, प्रमाता हि केवलं तत्कार्यावलोकने सति कारणमिदं समर्थमिदमिति व्यवहरतीति मा भूदुपलक्षणमपि तथापि अन्वयव्यतिरेकाभ्यां सर्वदार्थक्रियाकारित्वाभावेऽपि तत्कारित्वं सेत्स्यतीति, तथाहि – नगोपत्यकां समास्थितो धूमादग्निमनुमाय तदधित्यकारूढोऽपि पश्यति, तदा तस्मात् पूर्वदर्शितात् सिद्धो वह्निरस्ति इति सिद्धोऽन्वयोऽस्ति, वैपरीत्ये व्यतिरेक इत्यन्वयव्यतिरेकाभ्यां सिद्धं समीहितम्, एतदपि समाचष्टे – तत्कारित्वस्य चेत्यादिना ।

अन्वयव्यतिरेकगम्यस्य अप्रत्यक्षत्वे[102] सतोऽपि अप्रत्यक्षत्वप्राप्तेः न अर्थक्रियाकरणयोग्यत्वम्—तस्य[103] सत्यासत्यके निश्चयकाले दुरवधानत्वात्, सर्वस्य च अस्य अप्रकाशमानत्वे नरशृङ्गप्रायत्वम्, अर्थक्रियाकारितान्तरपर्येषणे च अनवस्था, इति प्रकाशमानतैव अनुन्मूल्यमानतथोचितविमर्शपरिस्पन्दा भावस्य सत्त्वम्, सा[104] च भेदाभेदवपुषां संबन्धादीनामस्ति, इति—निराशङ्कमेव सत्यत्वमेव तेषाम्, तथापि यदि परोऽनुबध्नीयात्[105]—इह लोकः प्राचुर्येण अर्थक्रियार्थी तत्कारिणि सत्यत्वं व्यवहरति तत्[106] किं संबन्धादीनाम् अस्ति इति, तदस्य[107] हृद-

१०२ तत्र दूषणमाह—अप्रत्यक्षत्व इति आभासमानस्य भासमानसमकालस्य नीलादेः सत्त्वं किं स्यादिति मृगितव्यं, न पुनरितरदश्वशृङ्गप्रायमिति भावः, अत्रापि समर्थयति मास्तु सर्वमेतत् अर्थक्रियाकरणयोग्यत्वमेव सत्त्वं भविष्यतीति तदपि सत्यासत्यके इत्यादि ।

१०३ तस्येति तत्कारित्वस्य सत्यासत्ययोरित्यर्थः । ज्ञानजननेन तत्कारणत्वं सदातनमित्यपि न युक्तमङ्कुर इव बीजस्य स्वज्ञाने जनितव्याभिमतेऽन्वयव्यतिरेकग्रहणभावेन कारणत्वानिश्चयात् ।

१०४ प्रकाशमानता ।

१०५ अनुबध्नीयात्—दोषमुत्पादयेत्, 'दोषोत्पादेऽनुबन्धः स्यात्' इत्यमरः ।

१०६ तदित्यर्थक्रियाकारित्वम् ।

१०७ अस्येति परस्य ।

यम् आश्वास्यते, यदि न कुप्यासि तत् सर्वत्रै
व्यवहारे यत्रापि स्फुटा संबन्धादिधीः[108]
उदेति एवमेव[109] तत्रापि, इति संबन्धादिरू
तया भेदाभेदवान् योऽर्थः तेनैव अर्थक्रिय
न तु स्वात्ममात्रविश्रान्तेन काचिदपि कद
चिदपि अर्थक्रिया, तथाहि—सुखेन स्मर्यमाणेन
अभिलाषः, इत्यादिक्रमेण सर्वो व्यवहारः
सुखाभासश्च योऽनुभूतः स एव अभिलष्यते
न तु अन्योऽननुभूतः, स एव च यदि प्राप्यते
तदभिलषितं प्राप्तम्[110] इति तुष्यते, यदि च

---

१०८ भेदाभेदमयेन संबन्धेन विना न काचित् व्य
येत्यर्थः ।

१०९ एवमेवेति अन्तःस्फुरन्त्येवास्त इत्यर्थः ।

११० अयमत्र भावः—एकदा येन सुखसाधनेन
सोऽवभासविशेषात्मा यद्यपि तदानीमेव तिरोहितत्वे
सुखं तदेव च तत्साधनमर्थयते प्रयतते च, तथा न
आभासविशेषरूपं सुखं तत्साधनं च लब्ध्वा परितुष्य
नादि मया प्राप्तं सुखं चेति मत्वा न चैतावदसत्यम् ए
किं तर्हि इदानीं सत्यं यदेतदवधीयार्थ्यैत योऽयं
भासः कालाभासो वा स्मृत्याश्रयभूतोऽभिष्वङ्गोऽपि या
एतावन्मात्रमेव, व्यवहारनिमित्तं मायीयं यदि नामासत्यं
मानं तु रूपं यथाविमर्शमसति बाधके सत्यमेव, ग्राह्यग्रा
दाख्यातिमयत्वेन भासमानं प्रतिबिम्बन्यायेन च प्रमा
मायापद एव चार्थक्रियाक्रियाभ्यां सत्यासत्यव्यवस्
सुखतत्साधनव्यक्तिभेदोऽपि नास्तीति कुतो जात्यादि

तु तदेव तर्हि किम् अभिलष्यते — प्राप्तत्वात्, अथ [111]अतदेव, तथापि कथम् अर्थ्यते — अज्ञातत्वात्, तस्मात् एतत् एवं भवति — यदि तदेव च अतदेव च तदपि च अतदपि च इति, [112]एवं सुखसाधनेषु वाच्यम् तदुक्तम् आचार्येणैव

'इष्टार्थितायामिष्टं वा विमृश्येतेष्टकारि[113] वा ।
न चाप्यदृष्टमिष्टं द्यौरपीष्टा दृष्टभोगभूः ॥
दृष्टं च सह [114]दृष्ट्यैव विनष्टमिति कार्थिता ।
द्रष्ट्रैकेन विमृष्टं तत् ........................ ॥'

इत्यादिग्री एवं च आभासात्मनि [115]अस्मिन् क्रियार्थी तत्त्वे आभासान्तरं सामान्यसंबन्धरू-
किं संबन्धार्द

ध्यति यावत्तस्य मुख्यार्थनीयस्य सुखस्य एकानेकत्वं

१०२ तत्र दूषणम त्कारिणां कारकाणां तेन सह संबन्ध एकानेकरूपो न मकालस्य नीलादेः स रकाणामेकानेकरूपतया न सिद्धा, तदाह वृत्तौ — यमिति भावः, अत्रापि दृभिरिति, अर्थक्रियासतत्त्वसंपादनायैव एतदेकानेकत्वमेव सत्त्वं भविष्यत हणकसूत्रे उपयोग उक्तः ।

१०३ तस्येति त दमापतितमनतिलङ्घनीयं यत्तदतद्रूपयोर्भेदाभेदमयता रणत्वं सदातनमित्य रूपेति । एतत् — भेदाभेदमयत्वं, तदेव च — भिन्नममतेऽन्वयव्यतिरेकग्र

१०४ प्रकाशमा चन्दनादि मया प्राप्तमिति ।

१०५ अनुबध्नी े — सुखसाधनम् ।

इत्यमरः ।

१०६ तदित्यर्थक्रिय भवेन ।

१०७ अस्येति पर ते भावजाते, असंवेद्यं सूक्ष्मत्वात् ।

पतया अनुप्रविष्टम्, अन्यथा न कथंचिद्व्यवहारः इति सकलदेशकालदशापुरुषोपयोगी यदि एष व्यवहारो न सत्यः तर्हि न अन्यस्य सत्यत्वं विद्मः — इति न अत्र भ्रान्तिः इति भ्रमितव्यम् । इति शिवम् ॥ ७ ॥ आदितः ॥ १०४ ॥

इति श्रीमदाचार्योत्पलदेवपादविरचितायामीश्वरप्रत्यभिज्ञायां
श्रीमदाचार्याभिनवगुप्तपादकृतविमर्शिन्याख्यटीकोपे-
तायां क्रियाधिकारे भेदाभेदविमर्शनं नाम
द्वितीयमाह्निकम् ॥ २ ॥

---

## क्रियाधिकारे

## तृतीयमाह्निकम् ।



प्रमाणानि प्रमावेशे स्वबलाक्रमणक्रमात् ।
यस्य वक्त्रावलोकीनि प्रमेये तं स्तुमः शिवम्[1] ॥ १ ॥

---

[2]एवं क्रियाशक्तिविस्फारनिरूपण[3]प्रसङ्गेन

---

१ तदिदं, यदादितः साधितं 'आदिसिद्धः कर्ता ज्ञाता चैक एव महेश्वर' इति तत्राहुः

'प्रमाणसिद्धं यत्किंचित्तत्सत्यमिति कथ्यते ।
प्रमाणाविषयं यत्तु तत्खपुष्पेण संमतम् ॥'

इत्याद्युक्तिं संभाव्य परे केन प्रमाणेन स महेश्वरोऽपि विषयीक्रियते इति, तत्र प्रस्तुतेश्वरतासिद्धौ प्रमाणं नोपयुक्तं नापि चोपपन्नमित्याशये गृहीत्वा

'प्रमाणान्यपि वस्तूनां जीवितं यानि तन्वते ।
तेषामपि परो जीवः स एव परमेश्वरः ॥'

इत्यागमोक्त्या तावदाह्निकार्थांशयेनाक्षिपति – प्रमाणानीति, प्रमाणानि प्रत्यक्षादीनि तेषां प्रमा जीवितं तदावेशश्च स्वबलाक्रमणायत्तं ततश्च यदधीना यस्य सिद्धिः स कथं तत्साधनं कुर्यात् । यस्य – मुखं भृत्या इवाधिकारसमर्पणार्थं राजमुखं पश्यन्ति, तथा प्रमेये अवश्यज्ञातव्ये प्रमाणानि वक्त्रावलोकीनि, तं शिवं स्तुम इत्यन्वयः ।

२ इत्थं चात्र मुख्यया वृत्त्या प्रस्तुतेश्वरसत्तासिद्धतारूपया प्रमाणार्थित्वासंभवेऽपि

'अर्थवत्त्वं न चेज्जातं मुख्यैर्यस्य प्रयोजनैः ।
तस्यानुषङ्गिकेष्वाशा कुशकाशावलम्बनम् ॥'

संबन्धपुरःसरं[3] सामान्यादीनां तत्त्वम्[4][5] उपपादितम्, अधुना[6] तु संबन्धतत्त्वमेव एकघनतया व्युत्पादनीयम्। तच्च[7] द्विविधमेव परमार्थतो– ज्ञाप्यज्ञापकता कार्यकारणता च, तत्र पूर्वस्यां मानमेयभावादिचिन्तास्पदभूतायां सर्वम् उक्तचरं वक्ष्यमाणं च आयत्तं– प्रमाणाधीना वस्तुसिद्धिः इति तत्र तत्र प्रसिद्धेः, एवं[8] च

---

इति नैयायिकोक्त्या तल्लक्षणं फलकथनमयुक्तमेव, तथापि यदि कश्चित् कीदृशं तत्प्रमाणं तत्फलं वा यस्यानुपपत्तिरनुपयोगो वा महेश्वरतासिद्धाविति ब्रूयात् तं प्रति प्रमाणतत्फलकथनावसर इति संबन्धरूपतां द्योतयितुं प्रमाणादीनां स्वरूपफलकथनार्थं चावतारयति– एवं क्रियाशक्तिः इत्यादि।

३ क्रियाशक्तिविजृम्भैवेदमिति।

४ संबन्धोपक्रमम्।

५ तत्त्वमिति पारमार्थिकं स्वरूपास्तित्वम्।

६ 'अर्थवत्त्वं न चेज्जातं मुख्यैर्यस्य प्रयोजनैः।
तस्यापि कथनं युक्तमानुषङ्गिकसिद्धये॥'

इति परमभिप्रेत्य परम्परया व्यवधानेनार्थवत्त्वमभ्युपेत्याह– अधुनेत्यादि। यतः संबन्धोपक्रममेव सामान्यादीनामपि तत्त्वं सेत्स्यतीति तदेव समर्थनीयम्।

७ तदिति संबन्धतत्त्वं, तत्र ज्ञाप्यज्ञापकता जडाजडनिष्ठा, कार्यकारणता तु जडनिष्ठैवेति।

८ जात्यादिपदार्थजातोपयोगितया तथा च परम्परयेश्वरप्रत्यभिज्ञानोपयोगोऽस्याः सिध्यति आनुषङ्गिकजात्यादिपदार्थव्यवस्थापने ईश्वरव्यवहारसाधने चास्योपयोग इति न सर्वथा तल्लक्षणनिर्माणोपेक्षा विधातुं युक्तेत्यर्थः।

प्रकृतसमर्थनीयवस्तूपयोगितया स्वयं च संबन्धरूपतया अवश्यविचार्यां मानादिस्थितिं निरूपयितुम्

'इदमेतादृक्........................................ ।'

इत्यादि,

'........ईशादिव्यवहारः प्रवर्त्यते ॥'

इत्यन्तं श्लोकसप्तदशकेन आह्निकान्तरमारभ्यते । तत्र श्लोकद्वयेन प्रमाणतत्फलस्वरूपं, ततः प्रमेयस्य स्वरूपं निरूपयितुं प्रत्याभासं प्रमाणस्य व्यापारो न तु स्वलक्षणात्मकवस्त्वेकनिष्ठतानियमेन – इति दर्शयितुं प्रत्यवमर्शबलेन आभासव्यवस्था, इति दशभिः श्लोकैः उच्यते, तत्प्रसंगात् मिथ्याज्ञानस्वरूपं श्लोकेन, प्रमेयस्वरूपसिद्धिश्च प्रकृतमपि ईश्वरवादम् अवलम्ब्य घटते – इति श्लोकेन उपदर्श्यते, स च एष सर्वः प्रमाणतत्फलप्रमे-

९ फलमिति प्रमा ।

१० निष्ठता विश्रान्तता ।

११ विमर्शबलात् ।

१२ प्रमेयतत्त्वं च प्रकृतमेकेश्वरवादे घटते इति ।

१३ तत्फलेति प्रमा ।

यादिप्रविभागः सति प्रमातरि[१४] प्रदर्शितरूपे ततो न तस्य[१५] प्रमेयता येन अत्रापि[१६] प्रमाणव्यापारसंभवः केवलं व्यवहारमात्रसिद्धिफलं प्रमाणम् अत्र[१७], इति श्लोकत्रयेण—इति तात्पर्यार्थः। यदुक्तम् 'क्रियासंबन्धादिबुद्धयो न भ्रान्तिस्वभावाः' इति, तदेव निर्णेतुं प्रमाणतत्फलस्वरूपं तावत् प्रसिद्धमनुवदति[१८]

[१९]इदमेतादृगित्येवं
यद्वशाद्व्यवतिष्ठते।

---

१४ उपपद्यते इत्यर्थः।

१५ तस्येति प्रमातुः।

१६ अत्रेति भगवत्यपि।

१७ अत्रेति परप्रमातरि।

१८ सिद्धस्य पुनः संस्कारमात्रेण कथनमनुवादः।

१९ इदानीमेतन्नयानुरूपोपपन्नप्रमाणस्वरूपफललक्षणमाह—इदमिति, इह प्रस्तुतेश्वरसत्तासिद्धौ प्रमाणं नोपयुज्यते तद्व्यवहारसाधनं मुक्त्वा इत्युक्तं, ततो मुख्यया वृत्त्या प्रमाणज्ञानार्थित्वाभावेऽपि कीदृशं तत्प्रमाणं तत्फलं वा स्यात् यदीश्वरो नोपयुज्यते इति, तज्जिज्ञासायां तल्लक्षणनिर्देशः, अत एव शास्त्रप्रारम्भे एव न तल्लक्षणं कृतम् प्रत्युत आदिसिद्धतानिर्देशादीश्वरं प्रति प्रमाणोपयोगस्तदा निरस्तः, अनादरादेव च प्रमाणविशेषलक्षणं न दर्शितं, क्रियाशक्तिविस्फारणप्रसङ्गात्मकादनुषङ्गादागता एकप्रमातृतत्त्वविश्रान्तिलक्षणानुषङ्गप्रयोजनकाश्च ये आनुषङ्गिका जात्यादयः पदार्थाः तेषां व्यवस्थापने चोपयोग एव प्रमाणस्येश्वरव्यवहारसाधनेऽपि च, इति न सर्वथा तल्लक्षणप्रणयनोपेक्षा कर्तुं युक्ता, तस्मादादिसिद्धप्रमातृसंलग्नोऽर्थप्रतिभासोऽर्थे प्रमाणत्वेनोपदिश्यते।

**वस्तु प्रमाणं तत्सोऽपि**
**स्वाभासोऽभिनवोदयः ॥ १ ॥**
**सोऽन्तस्तथाविमर्शात्मा**
**देशकालाद्यभेदिनि ।**
**एकाभिधानविषये**
**मितिर्वस्तुन्यबाधिता ॥ २ ॥**

यस्य वशात्—सामर्थ्यात्, वस्तु[20] 'नीलसुखादिकं' व्यवतिष्ठते—नियतां प्रकाशमर्यादां न अतिवर्तते 'इदमिति' स्वरूपेण 'एतादृक्' इति च विशेषणभूतनित्यानित्यत्वादिधर्मान्तरयोगेन, तल्लोके 'प्रमाणम्[21]' इति स्थितम्, तच्च विवेचकेन विचार्यम्[22]—इह वस्तुनः स्वरूपं स्वात्मवशेनैव न तावत् व्यवतिष्ठते—जडत्वात्, मम नीलं प्रकाशते चैत्रस्य वेति च तदा[23] कथमवभासः तस्मात् अन्यवशेन व्यवति-

२० नीलं बाह्यं, सुखमान्तरम् ।

२१ वस्तुनः स्वरूपे विशेषणे च यद्व्यवस्थापकं तत्प्रमाणमित्यर्थः । स्थितमिति प्रसिद्धम् ।

२२ तत्तु किं स्यादिति विवेचको यावद्विमृशति तावदिदमापतति ।

२३ तदा—नीलप्रकाशे स्वात्मावेशेनैव व्यवस्थाने ।

ष्ठते, अन्योऽपि चेत् जडः तत् अन्धेन अन्धस्य हस्तादानं, तस्मात्[२४] अन्योऽसौ संविदात्मा, सोऽपि यदि शुद्धो निर्विशेषो[२५] न तर्हि नीलस्यैव व्यवस्था[२६]हेतुः भवेत्—पीतादावपि तस्य तथात्वात्, तदसौ नीलोपरक्तो नीलोन्मुखो नीलप्रकाशस्वभाव इत्याभासः सन् नीलस्य व्यवस्थापकः, तत्प्रकाशस्वभावतैव हि तद्व्यवस्थापकता, स च नीलस्य प्रकाशो यदि [२७]अव्यतिरिक्तस्य, तत् पीतस्यापि स्यात्—प्रकाशात्मकचित्तत्त्वतादात्म्याविशेषात्, तेन व्यतिरिक्तीकृतस्य नीलस्य स प्रकाशः नीलं च इत्थम् ततो व्यतिरेकाभासयोग्यं यदि सोऽपि आभासो महतः प्रकाशात् व्यतिरिच्येत—महाप्रकाशाव्यतिरेके त[२८]स्य ततो नीलादेः व्यतिरेकाभावप्रसंगात्, महाप्रकाशाच्च न व्य-

२४ अन्यस्य जडत्वादनुपपत्तेः ।

२५ यथा वेदान्ते ।

२६ विभागेनावस्थाकारणम् ।

२७ अव्यतिरिक्तस्येति संवित्तत्त्वादिति भावः ।

२८ तस्येति आभासस्य, तत इति महाप्रकाशात् ।

तिरेकं किंचिदपि सहते, इति नूनं महाप्रकाशेन संकोच आत्मनि[२९] निर्भासनीयः, संविदो वस्तूनां च अन्योन्यसंकोचनप्राणो नञर्थरूपोऽसौ शून्य इत्युच्यते, संकोचावभास एव च मायीयप्रमातुः उत्थानम्, अत एकया सृष्टिशक्त्या प्रमातृप्रमाणप्रमेयोल्लासः परमार्थतः, तेन – शून्यधीप्राणदेहाद्युपाध्याश्रयस्वीकारात्मकसंकोचपरिग्रहसंकुचितात् मायाप्रमातुः अनन्तकालान्तर्मुखसंवेदनरूपात् स प्रमाणाभिमत आभासो यावत् प्रमेयोन्मुखतास्वभावः तावत् प्रमेयस्य देशकालाकाराभाससंभेदवत्त्वात्[३०] सोऽपि तथैव क्षणे क्षणे अन्यान्याभासरूपः स्रष्टव्यः, तदुक्तम् 'अभिनवोदयः' इति – अभिनवः – क्षणवासपरिम्लान्यापि न कलङ्कितः, तेन 'नवनवोदय'

---

२९ अयमत्र संक्षेपः – प्रतिभासो यद्यपि बोधस्वभाव एव तथापि तदीयमायाशक्तिवशात् मायीयस्य प्रमातुर्विच्छेदेन प्रतिभासमानो विषयवस्तुतया पृथग्भावो न व्यवह्रियते, तथाभूतभिन्नवस्तुगतान्येव च तेन प्रमात्रा नित्यताव्यापकताकारणतादीनि विशेषणानि व्यवह्रियन्ते तदुभयथापि यतो व्यवतिष्ठते वस्तु न तु स्वरूपेणैव केवलेन तत्प्रमाणमिति ।

३० उपरक्तत्वात् ।

इत्युक्तं भवति, सोऽपि[३१] यदि तथाभूतो माया-प्रमातृलग्नो न भवेत् ततो मम नीलावभासो यस्य तस्यैव पीताभासो मम इति न स्यात्, अस्ति च इदं स्वसंवेदनं—यत् सर्वत्र अबाध्य-मानम्, इत्येवं स्वत्वेन आभासमानो[३२] य आ-भासो—नवनवप्रमेयोन्मुख्यात् नवनवोदयः स प्रमाणं[३३] यतः प्रमां विधत्ते[३४], कासौ प्रमा?

---

३१ सोऽपीति, बोध एव हि सर्वकालानुगामी प्रमा, तस्य च सा प्रतिभासो यद्यपि मायाशक्तिव्याकुलीकरणात् संसारिणामभेदेन न सिद्धः तथापि संबन्धित्वेन सिद्ध एव—ममैवमवभासते इति विमर्शात्, अत्र च स्वसंवेदनमेव प्रमाणम्।

३२ स्वत्वेनाभासमानः—मायाप्रमातरि संबन्धित्वेन निर्भासमानः, आभासः—नीलाद्यवभासः।

३३ अत्रायं संक्षेपार्थः—इह वस्तु स्ववशादेव न व्यवतिष्ठते तदा हि मम नीलं प्रकाशते चैत्रस्य वेति न स्यात्, तदिदमन्यवशेन व्यव-तिष्ठते अन्यश्च यदि जडः तदिदमन्धस्यान्धेन मार्गदर्शनम्, तस्माद-न्योऽसौ संविद्रूपः, सोऽपि निर्विशेषो नीलपीतादि कथंकारं विभा-गेनावस्थापयेत्, तदसौ नीलोपहितो नीलोन्मुखो नीलप्रकाश इति स आभासो नीलस्य व्यवस्थापकः, नीलप्रकाशस्वभावताया हि नापरा व्यव-स्थापकता काचित् नीलस्य चाव्यतिरिक्तस्य चेत्प्रकाशस्तथा भवेत् स तर्हि पीतादेरपि न किं भवेत्—संवित्तत्त्वतादात्म्याविशेषात्, सर्वस्य ततो व्यतिरिक्तस्य नीलस्य स आभासः प्रकाशः, इत्थं चास्य व्यतिरिक्तता यदि महाप्रकाशादव्यतिरेके पारमार्थिके स्थितेऽपि व्यतिरेक आभासेत तत्श्चेदं जातं—शून्याद्युपाधिसंकोच एव यः प्रकाशस्यायमेवैकयैव सृष्टि-शक्त्या प्रमातृप्रमाणप्रमेयोल्लासः, यथोक्तं सिद्धपादैः

'उदेत्येकः समालोकः प्रमाणार्थप्रमातृदः।'

फलस्वभावा इति चेत्, आह—स एव[35] बोधरूप आभासो मितिः प्रमाणफलम् इति संबन्धः । ननु एवं पर्यायत्वमुक्तं[36] भवेत् न तु फलस्वरूपम्, आह—बाह्योन्मुखतया प्रकाशरूपतया तत्र[37] तत् प्रमाणं, या तु तस्यैव[38] अन्तर्मुखात्मा विमर्शरूपता[39] प्राक् उपपादिता तत्स्वभावेन केवलं विषयदशासंकुचितेन[40] स एव बोधः फलं, यथाहि[41] 'यः शूरोऽहं स एव

इति, तेन देहाद्युपाधिसंकोचनतोऽनन्तकालान्तर्मुखो यावद्वर्तते तावत्प्रमेयगतदेशकालोपरक्ततया क्षणे क्षणेऽन्यान्यरूपतया नवनवोदयः सन्, तस्मिन्नेव स्वशब्दवाच्ये एकस्मिन्नेवानन्तकालव्यापिनि मायाप्रमातरि संबन्धित्वेन निर्भासमानो—मम नीलाद्यवभासो यस्यैव पीताद्यवभासः, इत्यादिना रूपेण यः स एव प्रमाणमिति ।

३४ यतः स एवाभासः प्रमानिष्पत्तौ सव्यापारः ।

३५ अयमत्रार्थः—मायाप्रमातुर्हि अनन्तकालान्तर्मुखसंवेदनरूपाद्य आभासः प्रमेयोन्मुखतास्वभावोऽतो देशकालाकाराभाससंभेदवत्त्वादन्यान्यरूपो नवनवाभ्युदयः, स एवान्तर्मुखतास्वभावः अत एव प्रमेयोन्मुखताविरहात् देशकालाकारसंभेदाभावाद्बोधरूपो नापि नवाभ्युदयः—प्रमेत्यर्थः ।

३६ पर्यायत्वमित्यनर्थान्तरत्वम् ।

३७ तत्रेति आभासे ।

३८ तस्येति आभासस्य ।

३९ विमर्शेति शब्दनरूपता ।

४० विषयोपरागसंकुचितेन शब्दनात्मना ।

४१ यथाहि क्षीरोदकमामिश्रीभूतं न ज्ञायते—कुत्र भागे क्षीरं कुत्रो-

विजयी' इति एकनिष्ठे शूरत्वविजयत्वे विवेकवता हेतुफलभावेन व्यवस्थाप्येते, यतो हि 'अहं शूरः ततो विजयी' इत्येवं, यतो नीलप्रकाशः ततो 'नीलमिदम्' इति परामर्श इति एकरूपत्वेऽपि हेतुफलभावः[४२], यथोक्तं

'[४३]तद्वशात्तद्व्यवस्थानात्........ ।'

इति। किं च ईह[४४] व्यापाररूपमेव फलं, व्यापारश्च [४५]व्याप्रियमाणात् व्यापार्यमाणात् वा अनन्याकार एव सिद्धः, इति—अभेदः प्रमाणफलयोः[४६], विमर्शबलेन[४७] च यतः प्रमाणं

---

दकं, तथेहापि हेतुफलयोर्भेदाज्ञाने सूक्ष्मेक्षिकया भेदकल्पनं दृष्टान्तेनाप्याह यथाहीति।

४२ प्रकाशविमर्शद्वारेत्यर्थः।

४३ तद्वशादिति विमर्शवशात्, सूत्रेऽपि 'यद्वशाद्व्यवतिष्ठते' इत्युक्तम्।

४४ इहेति प्रमाणतत्फलविवेके करणस्य प्रथमसाध्यत्वात्।

४५ व्याप्रियमाणादिति कर्तुः। व्यापार्यमाणादिति करणात्।

४६ अत्रायं भावः—फलफलेन तु प्रयोजनापरपर्यायेण प्रवृत्तिप्राप्त्यादिना व्यतिरिक्तेन भूयतां नाम, अतो विमर्श एव फलं, तद्बलेन बोधः प्रमाणं, विमर्शश्च शब्दं देशकालविशेषाभासानालिङ्गितसामान्यरूपाभासविश्रान्तं जीवितत्वेनापेक्षते, इति मुख्यत्वेन प्रमाणफलयोरभेद एव न्याय्यः।

अयमत्र संक्षेपार्थः—निर्विकल्पघटाद्याभासः प्रमाणं परतोऽयं घट इति विमर्शः फलमिति यद्यपि तथापि विमर्शकानवभासादभेदः। अथ वायं घट इत्यत्रैवाभासोऽस्ति तत् प्रमाणं विमर्शश्च फलमित्यभेदः एकैव हि प्रतीतिरन्तर्बहीरूपतया प्रमातृप्रमेयप्रकाशमयी समुदेति तत्र च शिवतेश्वर-

# विमर्शश्च शब्दजीवितः शब्दैश्च आभासा-

तासङ्गावोऽपि वक्ष्यते ततश्चार्थाभासभागश्चिदविभागादीश्वरतेति सा प्रमाणतादशा तदेव च प्रमाणस्य फलमुच्यते योऽयं तावति प्रमेये मयेदं ज्ञातमिदमित्येव वैतादृगिति वा तथा सव्यापारप्रमातृतोल्लासः, तदेव दर्शितं वृत्तौ स एव चाभासोऽयमिति नित्य इति वेति । स एव व्यतिरेकबुद्ध्या वस्त्वित्ति तदपेक्षया वस्तुप्रस्तावेऽपि पुंलिङ्गनिर्देशः ।

४७ विमर्शबलेनेति, वाचकावच्छिन्नवाच्यप्रतिभास एवैवंविधासु बुद्धिषु भवति, सोऽयं शब्दविशिष्टार्थप्रतिभासाच्छब्दो जीव इति व्यपदिश्यते, नहि शब्दानुसंधानरहितः कश्चित् प्रत्ययो दृश्यते – अनुल्लिखितशब्दकेष्वपि प्रत्ययेषु सामान्यशब्दसमुन्मेषसंभवात् तदुल्लेखव्यतिरेकेण प्रकाशात्मिकायाः प्रतीतेरनुत्पादात्, आह च हरिः

'न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते ।
अनुविद्धमिव ज्ञानं सर्वं शब्देन गृह्यते ॥'

इति, अतो विमर्श एव फलं तद्बलेन बोधः प्रमाणमिति भावः ।

४८ अत्राहुः – यथा पुरुष इति घट इति वा निरतिशयज्ञानमात्रोत्पादे तावन्मात्रविषयप्रत्यक्षता भवति, न तत्र ज्ञानं प्रकाशते अगृह्यमाणेऽपि ज्ञाने विषय एव प्रतिभासते, तथा दिक्कालादिविशिष्टातिशयज्ञानोत्पादेऽपि, तथा च

'पूर्वापरचिरक्षिप्रक्रमाद्यवगमेष्वपि ।
दिक्कालादिविशिष्टोऽर्थः स्फुरत्यतिशयात्मकः ॥
प्रत्यक्षं किं स कालादिः प्रतीतिं प्रच्छ किं मया ।
गृह्यते तद्विशिष्टोऽर्थः स च नेत्यद्भुतं महत् ॥
एतेन समवायेऽपि प्रत्यक्षत्वं प्रकाशितम् ।
इहेति तन्तुसंबद्धपटप्रत्ययदर्शनात् ॥'

इति, तथा दण्डी पुरुष इति विशेषणज्ञानाभ्युपायातिशयवशात् सातिशयज्ञानजनने तदग्रहण इव स एव विषयो जायते – सामानाधिकरण्येन निःसंधिबन्धतया प्रतिभासात्, तदेतद्दर्शयति – शब्दश्चाभासान्तरैरित्यादि ।

न्तरैः देशकालादिरूपैरनामृष्टे एकत्रैव आभासमात्रे प्रवर्तते—घट[४९] इति लोहित इति, ततो देशकालाभासयोः स्वलक्षणत्वार्पणप्रवणयोः अनामिश्रणात् सामान्यायमाने[५०] आभासे प्रमाणं प्रवर्तते, 'अयम्[५१]' इत्यपि हि अवभास आभासान्तरानामिश्रे पुरोवस्थितावभासमात्रे, इति उक्तं श्रीमदाचार्यपादैरेव

'नियतेऽप्ययमित्येव परामर्शः पुरःस्थिते ।
सर्वभावगतेदन्तासामान्येनैव जायते ॥'

इति, तत[५२] एव आभासमात्रं वस्तु, स्वलक्षणं[५३]

---

४९ घट इति हि घटमात्रं संनिवेशविशेषमात्ररूपम्, एष इति च देशावभासः, इदानीमिति कालावभासः, मृण्मय इति विशिष्टस्वभावता प्रथते, इत्येवं पृथक् पृथगेव भिन्नवाचकोपलक्षिते तत्र तत्र भिन्नाभिसंधानाभिलषिते भिन्नाकारिणि भिन्नाः प्रमितयोऽन्योन्यनिरपेक्षवृत्तयो भवन्तीति ।

५० इदन्ताभासेन सामान्यायमाने प्रयोक्तृगतप्रत्यक्षात्मकवस्तुस्वालक्षण्यबलात् विशेषनिष्ठतेत्यर्थः ।

५१ अयमिति हि यत् पुरोवर्तमानं तदपि तावन्मात्रमेवाह, देवदत्तोऽयमिहेदानीं तिष्ठतीति हि अपि यावच्छब्दगोचरः तावदेवैष प्रकार इत्यन्यत्र कैव वार्ता ।

५२ तत इति सामान्य एव प्रमाणावस्थितेः ।

५३ तदेवमाभासमात्रं वस्तु इति सिद्धान्तितम्, अधुना स्वलक्षणं नाम किमुच्यते? इत्याह—स्वलक्षणमिति, तदाभाससामानाधिकरण्यं पञ्चकं जातिगुणक्रियानामद्रव्यकल्पनाभेदात्, ताश्च क्वचिदभेदेऽपि भेदाकल्प-

तु तदाभाससामानाधिकरण्याभासरूपम् आ-
भासान्तरम् एकम् अन्यदेव, तत्र[५४] च पृथगेव

नात् क्वचिच्चाभेदेऽपि भेदकल्पनात् कल्पना उच्यन्ते, सामानाधिकरण्यं चासां दर्शितं यथा—

'जातिजातिमतोर्भेदो न कश्चित्परमार्थतः ।
भेदारोपणरूपा च जायते भेदकल्पना ॥'

इदमस्य गोर्गोत्वमिति नहि कश्चिद्भेदं पश्यति तेनाभेदकल्पनैव । तथा

'एतया सदृशन्यायात् मन्तव्या गुणकल्पना ।
तत्राप्यभिन्नयोर्भेदः कल्प्यते गुणतद्वतोः ॥'

तथा

'भेदारोपणरूपैव गुणवत्कर्मकल्पना ।
तत्स्वरूपातिरिक्ता हि न क्रिया नाम काचन ॥'

इति । तथा चाहुः गच्छति देवदत्त इति देवदत्तस्यान्यूनानतिरिक्तस्य प्रतिभासात् भिन्नयोस्त्वभेदेन प्रवृत्ता कल्पना चैत्रोऽयमित्यनेन निश्चया-म्नामनामिनोः, तथा चाहुः चैत्र इत्ययं शब्दः अयमित्यर्थः किं नामना-मिनोः सामानाधिकरण्यम्,

'एवं दण्ड्ययमित्यादिर्मन्तव्या द्रव्यकल्पना ।
सामानाधिकरण्येन भेदिनोर्ग्रहणात्तयोः ॥'

इति । न च वाच्यं शुक्तिरजतवदेता अपि कल्पना भ्रान्ता इति—बाधा-प्रत्ययासंभवादासाम्, तथाहि—यत्र वस्तु वस्त्वन्तरात्मनावभासते तत्र बाधको भवति मरीचिष्विव जलबुद्धौ, इह तु जात्यादि वस्त्वन्तरं नास्ति, यतो वस्त्वन्तरात्मनास्य ग्रहो भवेत्, व्यक्तिविषया एव एते सामान्यादिविकल्पाः, तस्माद्वस्त्वन्तरानवभासिष्वेषु न बाधकः प्रत्ययो जायते, तस्मात् न विपर्ययात्मानः कल्पना इत्यलम् ।

५४ तदेवमाभाससामानाधिकरण्यात्म स्वलक्षणं, तत्रापि प्रमाणं पृथ-गेवेत्याह—तत्रेत्यादि, न च वक्तव्यं—कथमनयोः पृथग्व्यवहारः प्रतीतिं को हि निह्नुते, तथाहि

'जातिर्जातिमतो भिन्ना गुणी गुणगणात्पृथक् ।
तथैव तत्प्रतीतेश्चाभासत्वं बाधवर्जितम् ॥'

च प्रमाणं, तत्परं मिश्रीकारेषु तेषु आभासेषु गृहीतग्राहि न प्रमाणम्, इति अग्रे भविष्यति, अध्यवसायस्य[५५] अस्मदुक्तनयेन शब्दप्राणितस्य प्रत्याभासविश्रान्तौ तदपेक्षमपि[५६] प्रामाण्यं वदता प्रत्याभासनिष्ठमेव प्रामाण्यमुपेत्यम्[५७], इत्यास्ताम्—किमवान्तरेण । ननु यदि विमर्शः प्रमाणव्यापारः स तर्हि द्विचन्द्रेऽपि अस्ति? मैवम्—स हि संस्कारयो-

---

तथा द्रव्यनाम्नोश्च भेदेनैव प्रतीतिः, नहि देवदत्तशब्दोऽयमिति तद्वाच्यः प्रतीयते, न शब्दविशिष्टवाच्यावगतिरेषा, न शब्दोऽस्यामर्थारूढोऽवभासते, नापि शब्दविवर्तरूपेणार्थः परिपोस्फुरीति, तथा दण्ड्ययमिति द्रव्याभेदकल्पना तु स्वल्पमतिभिरेव, नहि दण्डोऽयमिति देवदत्ते प्रतीतिः अपि तु दण्डीति, तत्र च प्रकृतिप्रत्ययौ पृथगेवोपलभ्येते—दण्डोऽस्यास्तीति, तदिह यथैव वस्तु तथैवारोप इति, तथा क्रियाप्येवं योज्या

'क्रिया हि तद्वतो भिन्ना भेदेनैव प्रगृह्यते ।
चलतीत्यादिबोधेषु तत्स्वरूपावभासनात् ॥'

इति ।

५५ ननु निर्विकल्पे भवतु नामैवं, सविकल्पे पुनः कथमित्याह—अध्यवसायस्येति, तदुक्तम्

'निर्विकल्पानुसारेण सविकल्पकसंभवात् ।
ग्राह्यं तदानुगुण्येन सविकल्पस्य मन्महे ॥'

इति ।

५६ तदपेक्षमिति विश्रान्त्यपेक्षम् । वदतेति सौगतेन ।

५७ आदर्तव्यम् ।

गात् आत्मानमभिमतप्रसिद्धार्थक्रियाप्राप्ति-पर्यन्तमनुवर्तयन् अनुन्मूलितवृत्तिः स्थिरः सन् तथा[58] भवति, मध्ये पुनरुन्मूलनं चेत् सहते न तर्हि असौ तथा विमर्शः, नायं विमर्शः पूर्वमपि—एकेन अन्तर्मुखेन वपुषा पूर्वमेव तस्य निर्मूलनात्, स्वसंवित् अत्र च साक्षिणी, तदैव 'न इदं रजतम्' इति वृत्त-पूर्वस्यैव विमर्शस्य अविमर्शीकरणं संवेद्यते। उक्तं च[59] एतत् बाधविचारे, वक्ष्यते च

'रजतैकविमर्श............'

इत्यत्र, एवं स्थिते द्विचन्द्रेऽपि यावत् पर-कुतूहलसंपादनमर्थक्रियासंमतम् अपूर्ववस्तु-दर्शनाय चिकीर्षति तावत् अवज्ञोपहासशो-कादिविवशः परजनवचनाकर्णनेन समुन्मू-ल्यमानं प्राच्यं 'द्विचन्द्रोऽयम्' इति परामर्शं स्वसंवेदनादेव अभिमन्यते[60]। ननु एवं[61] यत्र

---

५८ तथेति प्रमाणव्यापाररूपो विमर्शः।

५९ आचार्येण।

६० अत्रायं भावः—विमर्शो हि द्विचन्द्रबोधादुत्पन्नोऽपि उन्मूलनमन्ते सहिष्णुः पूर्वमपि उन्मूलित एवान्तर्मुखेन वपुषा, स एवासौ नान्यः, स्वसंविदेव चात्र साक्षिणी—तदेवेदं न रजतमिति प्रतीतेः, द्विचन्द्रमपि

अर्थक्रियां न अन्विच्छति तत्र कथं बाधाबाधव्यवहारः? मा भूत्–किं नः[६२] त्रुटितम्, प्रवृत्तिर्हि न सर्वत्र प्रमाणत एव, किं तर्हि क्वचन संशयत एव अर्थपक्षाधिक्यात् अर्थित्वतारतम्यादपि[६३] वा–कृष्यादौ सविषान्नभोजने निश्चितसंभावितदृष्टप्रत्यवाये च चौर्यादौ प्रवृत्तिदर्शनात्, तत् अर्थित्वातिशयः प्रवृत्तौ तावत् निबन्धनम्, लोकश्च प्रवृत्तः क्वचन अ-

परस्य विस्मयादर्शयन् परोपहासावज्ञाकृपादिपात्रीक्रियमाण एव द्विचन्द्रविमर्शं प्राच्यं तदेव वर्तमानतत्प्रकाशबलोपनतमप्येवमुन्मूलितमेवाभिमन्यत इति, तत उक्तं–सोऽन्तस्तथा विमर्शात्मेति ।

६१ तदित्थमेतावतात्रेदं फलितम्–अर्थक्रियापरीक्षया द्विचन्द्राद्यवभासादौ नास्ति प्रमाणव्यापारो विमर्श इति, तत्र शङ्कते–नन्विति ।

६२ यदि हि प्रमाणत एव प्रवृत्तिः स्यात् तर्हि अर्थक्रियाभावे प्रवृत्तं दुष्टं स्यात्प्रमाणं, न तथास्ति प्रवृत्तिः प्रथममेव पश्चात् प्रमाणावसरे बाधाबाधव्यवहार इत्याह–किं न इति ।

६३ ततश्चेदमत्र फलितं–न सर्वत्र प्रमाणान्वेषणप्रयासः, यत्रैव विभागव्युत्पत्तिः तत्रैव प्रमाणावधारणावकाशः, सा च विभागव्युत्पत्तिः यत्न-हातव्ये यत्नोपादेये चावश्यमुपयुज्यते, तथाहि–ग्रामगतो हि पुरुषो ग्रामात् पुनः स्वगृहं प्रत्यागच्छन्न दग्धं न लुठितं न ततो धनं नापि दाराः केनचिन्नीता इति प्रमाणं विना कथं निश्चिनुयात् तत्रार्थपक्षाधिक्यात् संशयेऽपि प्रवृत्तिः अज्ञानात् सविषेऽन्ने प्रवृत्तिः विपरीतवेदनान्मत्तोऽपि क्षुधार्त्तोऽपि हि अर्थित्वतारतम्यात् ।

नुन्मूलितप्रमितिकः प्रमाणतां प्रतिपद्यते,[६४] क्वचित् अन्यथाभवन् विपर्ययमिति,[६५] एवम्[६६] आ जन्म यतोऽनेन अभ्यस्त आ पूर्वजन्मशतेभ्योऽपि वा प्रमाणाप्रमाणविभागः ततो मणिरूप्यादिवत् तत्स्वरूपम्[६७] आपातमात्र एव विलक्षणम् ईक्षते, अस्ति[६८] हि तस्य परमार्थतो

---

६४ ततश्चेदमत्र फलितम्, प्रवृत्तानां चार्थिनां च सकृदुपलब्धार्थक्रियासंवादासंवादानामवभासमानेष्वर्थेषु तथा व्युत्पत्तिरूपं जायते यथा जानात्येतादृशि इन्द्रियार्थव्यञ्जकदेशादिमध्यस्थिता विगणेन्द्रियजनितामन्यादृशमेव तज्ज्ञानमन्यथाभूतं च विगणेन्द्रियकार्यं कारणभेदात् ततश्च वस्तुस्थित्या विलक्षणमेव तत्प्रमाणभूतस्वरूपमभ्यासात् प्रत्यक्षमेव भवति संदिग्धार्थक्रियायोग्यभावे विपरीतेऽपि वार्थे तैमिरिकस्य संदिग्धप्रामाण्यमप्रमाणमेव वा भवेत्, तत्र संदेहे अर्थपक्षस्य बलवत्त्वावसायात् प्रवृत्तिः स्यात्, अनर्थपक्षे तु बलवति निवर्तत एव, विपरीते तु सर्वथा निवृत्तिरेव, क्वचिदर्थपक्षबलत्वावसायात् प्रवृत्तस्यानर्थप्राप्तिरपि भवति—अर्थिनामार्तितारतम्यात् आवश्यकेनान्यथा च प्रवृत्तयो विचित्रीभवन्ति विषममाश्रिताः शङ्कायामपि क्षुधार्ता भोक्तुमन्नं प्रवर्तन्ते इति।

६५ विपर्ययमिति अप्रमाणताम्।

६६ ननु भवतु नामैवमध्यवसायेऽनुन्मूलितपरामर्शत्वात्प्रमाणव्यापारः, निर्विकल्पे पुनः प्रमाणव्यापारासंभव एवायात इत्यत आह—एवमिति।

६७ तदिति प्रमाणाप्रमाणस्वरूपम्।

६८ ततश्चेदमत्रायातमित्याह अस्ति हीति, अयं भावः—व्युत्पादितचेतसां सावधानानां प्रसंख्यानपराणामाधिसहिष्णूनां संव्यवहर्तॄणां स्थूलोपलक्षणायैन्द्रियिकप्रत्यक्षमर्थक्रियायोग्यप्रदर्शकत्वेन प्रामाण्यभाक् कीदृक् स्यादिति तत्स्वरूपं निरूप्यं यत् तदसकृत्संवादिज्ञानोत्पादिकालभाविव्यञ्जकदेशेन्द्रियादिसंनिविष्टमविगुणेन्द्रियादिजत्वं न त्वपूर्वं किंचिदित्यर्थः।

वैलक्षण्यं कारणभेदादिकृतं, ततश्च[६९] यदार्तिं परिमितां सह्याम् अभिमन्यते तत एव अर्थितामहाग्रहेण यत्र तत्र न प्रेर्यते तदा विसंवादभीरुः निश्चितप्रामाण्यात् बोधात् अदृष्टे दृष्टेऽपि वा प्रवर्तमानो न विसंवाद्यते, इति स – प्रेक्षापूर्वकारी भण्यते, तेन लौकिकं[७०] प्रमाणस्वरूपम् अनूदितं सामान्य[७१]संबन्धादिज्ञानेऽपि मोहात्[७२] अप्रामाण्याशंकां शमयितुम्, अत एव विभागविशेषलक्षणपरीक्षादिभिरिह न

---

६९ अत्रायं भावः – विसंवादभीरुभिरेतत् प्रमाणमर्थ्यते, तच्च न प्रवर्तकतामात्रेण, अपि तु संवादकत्वेन – इति संवादकत्वमेव प्रमाणत्वमिति सिद्धम् ।

७० लोकप्रसिद्धं, न त्वपूर्वं स्वपरिभाषितं किंचित् – प्रमात्रैव क्रियते इत्यर्थः ।

७१ सिद्धं चेत् किमर्थमनूदितमित्यत आह – सामान्येति ।

७२ मोहादिति, तथा चाचार्यधर्मकीर्तिः

'प्रसिद्धानि प्रमाणानि व्यवहारश्च तत्कृतः ।
प्रमाणलक्षणस्योक्तौ ज्ञायते न प्रयोजनम् ॥'

इति पराक्षेपमाशङ्क्य 'प्रामाण्यव्यवहारमात्रेण शास्त्रं मोहनिवर्तनम्' इत्युक्तवान्, तथा चादृष्टेऽवीच्यादिनरकगमनश्रवणपर्यन्तसंतापानुभवलक्षणो महाननुपायः संभाव्यते, तत्प्रहाणार्थं प्रमाणलक्षणमवश्योपदेश्यं श्रोतव्यं च येन तत्प्रदर्शितप्रक्रियानुष्ठानात् तत्प्रमाणं स्यात्, एवं चावश्यकर्तव्येऽस्मिन्नदृष्टे स्वर्गाद्यपर्यन्तसुखप्राप्तिरागमप्रसिद्धास्ति तदर्थमपि एतदागमलक्षणमनुसर्तव्यमेव, तथानर्थपरिहारार्थं प्रत्यक्षानुमानलक्षणमपीत्यर्थः ।

आयासितो लोकः; यत् यत् अबाधितस्थैर्यम् अत एव अप्रतिहतानुवृत्तिकं[७३] विमर्शफलं विधत्ते, तत्तद्बोधरूपं बोध्यनिष्ठं प्रमातृस्वरूपविश्रान्तं प्रमाणम् इति, तच्च ऐन्द्रियिके[७४] बोधे सुखादिसंवेदने[७५] योगिज्ञाने[७६] च अविवादमेव – मुख्यतयैव प्रमेयरूपे आभासे साक्षात् वि-

---

७३ अर्थक्रियापर्यन्तम् ।

७४ बाह्येन्द्रियजन्ये ।

७५ अन्तःकरणवेद्ये ।

७६ योगिज्ञाने चेति – योगिज्ञाने च दूरव्यवहितमपि प्रत्यक्षीभवति तथा च

'यथानुवाकग्रहणे संस्थाभ्यासेन कल्पितः ।
स्थिरः करोति संस्कारः पाठस्मृत्यादिपाटवम् ॥
यथा वा पुटपाकेन शोध्यमानं शनैः शनैः ।
हेम निष्प्रतिकाशं तद्याति कल्याणतां पराम् ॥
तथैव भावनाभ्यासाद्योगिनामपि मानसम् ।
ज्ञानं सकलविज्ञेयसाक्षात्कारक्षमं भवेत् ॥
अस्मदादेश्च रागादिमलावरणदूषितम् ।
मनो न लभते ज्ञानप्रकर्षपदवीं पराम् ॥
प्रत्यहं भावनाभ्यासक्षपिताशेषकल्मषम् ।
योगिनां तु मनः शुद्धं किमिवार्थं न पश्यति ॥
तदेवं क्षीणदोषाणां ध्यानावहितचेतसाम् ।
निर्मलं सर्वविषयं ज्ञानं भवति योगिनाम् ॥'

इति भट्टजयन्तः ।

भ्रान्तेः, अनुमानजा[77] तु प्रतीतिः आभासान्तरात् कार्यरूपात् स्वभावभूतात्[78] वा आभासान्तरे प्रतिपत्तिः, वस्त्वन्तरस्य च तेन साकं कार्यकारणभावनियमः सामानाधिकरण्यनियमश्च ईश्वरनियति[79]शक्त्युपजीवन एव अव-

७७ तदेवं पुरोवर्तिनि पदार्थजाते प्रत्यक्षं व्यापारसाधनं परोक्षेऽर्थजातेप्याह–अनुमानजेति, तच्चानुमानं लिङ्गजज्ञानं, लिङ्गं कार्यादिपञ्चकम्, तथा चोक्तम्

'पञ्चलक्षणकाल्लिङ्गाद्गृहीतान्नियमस्मृतेः।
परोक्षे लिङ्गिनि ज्ञानमनुमानं प्रचक्षते॥'

इति। अत्रापि प्रमेयोन्मुखं लिङ्गविषयं ज्ञानं ज्ञानविषयीकृतं वा लिङ्गं प्रतिबन्धस्मरणसहितं प्रमाणम्, अन्तर्मुखतया विमर्शात्मकं लिङ्गज्ञानं फलं, तच्च पञ्चधा–पक्षधर्मत्वं सपक्षे सत्त्वं विपक्षाद्व्यावृत्तिरबाधितविषयत्वमसत्प्रतिपक्षत्वं चेति। सिसाधयिषितधर्मविशिष्टो धर्मी पक्षः। साध्यधर्मयोगेन निर्ज्ञातं धर्म्यन्तरं सपक्षः। साध्यधर्मसंस्पर्शशून्यो धर्मी विपक्षः। अनुमेयस्यार्थस्य प्रत्यक्षेणागमेन वानपहरणमबाधितविषयत्वम्। संशयबीजभूतेनार्थेन प्रत्यनुमानतया प्रयुज्यमानेनानुपहतत्वमसत्प्रतिपक्षत्वं, तदुपेतं लिङ्गमनुमापकं भवति।

७८ स्वभावभूतादिति, नियमस्मृतेरिति यदुक्तं तत्र नियमो व्याप्तिः, व्याप्तिश्चाविनाभावः, अविनाभावश्च तादात्म्यं, तथाहि–यो हि यदात्मा भावः स कथं तमुत्सृजति यथा वृक्षात्मिकैव हि शिंशपा तेन वृक्षत्वमनुमापयति सोऽयं स्वभावहेतुरुच्यते वृक्षोऽयं–शिंशपात्वादिति, इह वृक्षत्वशिंशपात्वयोरभेदात् शिंशपात्वग्रहणे सति का कथा वृक्षेतरसमारोपस्येति।

७९ ईश्वरनियतिशक्तीति, कार्यकारणभावो हि परमार्थतो भावानामस्वाभाविकः यदि हि कश्चिदग्निर्नाम भवेत् धूमो वा तदेतयोर्यो नियमः पौर्वापर्यलक्षणः स्वस्वभावो भवेत् यावता तावेव न कौचित् संविद्वि-

धार्यो भवति न अन्यथा, तेन यावति नियतिर्ज्ञाता तावति देशे काले वा अनुमानं प्रमाणम्, आगमस्तु[80] नामान्तरः शब्दनरूपो द्रढीयस्तमविमर्शात्मा चित्स्वभावस्य ईश्वरस्य अन्तरङ्ग एव व्यापारः प्रत्यक्षादेरपि जीवितकल्पः, तेन[81] यत् यत् आमृष्टं तत् तथैव, यथा

---

जृम्भा मुक्त्वा संविदेव तथा तथा प्रथते स्वप्नसंकल्पयोगिनिर्माणादाविव केवलं संविद्विजृम्भावसादे यत्र यत्र नियतिशक्त्यानन्तर्यानियमोऽवभास्यते यथाग्नेरेव धूमादि, तद्यथा

'सूर्यास्तमयमालोक्य कल्प्यते तारकोदयः।
पूर्णचन्द्रोदयाद्वृद्धिरम्बुधेरवगम्यते॥
उदितेनानुमीयन्ते सरितः कुम्भयोनिना।
शुष्यत्पुलिनपर्यन्तविश्रान्तखगपङ्क्तयः॥
पिपीलिकाण्डसंचारचेष्टानुमितवृष्टयः।
भवन्ति पथिकाः पर्णकुटीरकरणोदिताः॥
अन्येषामपि हेतूनां भूम्नां जगति दर्शनम्।
उपलक्षणमेतावदिहास्माभिः प्रदर्शितम्॥'

इति।

८० आगमस्त्विति, सामान्यं चेदमागमलक्षणं परमेश्वरप्रणीतपशुप्रमातृप्रणीतेषु, न च वक्तव्यं—पशुप्रकल्पितः कथमागम एतादृक्स्वभावो भवति यतः संसारिणोऽपि प्रमातुः प्राणादेर्न परमेश्वरतापरिहारः, तथात्वे हि सर्वात्मना प्रमातृतैव तदानीं न स्यात्—तस्य स्वतन्त्रात्मत्वात्, स्वतन्त्रस्यैव प्रमितिकर्तृत्वात् केवलं प्राणादेः परमेश्वरतापरिहारेण संवेद्यात्मस्वरूपोन्मज्जनात् प्रमातृता कथ्यते, ततश्च तस्य स्वयं निवार्यमाणापि मनसि स्वरसतोऽनिच्छोरपि प्रतीतिरुपजायमाना पारमैश्वर्यांशादेव जायते न तु पशुस्वभावात्, ततः सार्वज्ञ्यं नातिक्रामतीति।

८१ तेनेति आगमेन।

नैतत् विषं मां मारयति, गरुड एव अहम् इति, तत्र तु तथाविधे[८२] शब्दनात्मनि विमर्शे आनुकूल्यं यो भजते शब्दराशिः सोऽपि प्रमाणं, यथा — वेदसिद्धान्तादिः, अन्योऽपि वा बौद्धार्हतागमादिः, तेन[८३] हि यत् शब्दनम् उत्पादितं 'ज्योतिष्टोमकारी अहं स्वर्गं गन्ता' इति, 'दीक्षितोऽहम् अपुनरावृत्तिभागी' इति, 'कारुणिकोऽहं बुद्धपदं गन्ता' इति, 'गाढक्लेशसहिष्णुरहम् अर्हत्पदं प्रपत्ता' इति, तत्र न विपर्यय[८४]

---

८२ तथाविध इति द्रढीयस्तमं ।

८३ वेदादिना ।

८४ तत्र न विपर्यय इति, वागपि हि अज्ञानकर्तृका नियतवक्तृका च प्रतिवक्तृषु नियतेषु परिमितेषु च प्रतीतिमुत्पादयन्ती प्ररूढा पारमैश्वर्यांशोद्गतैव नियतेषु तेषु वक्तृमुखकुहरेषु स्फुरति, न तु कुतश्चित्पशुप्रमातृनिरोधाभिलापादपि निरुध्यते, ततः सा प्रसिद्धिरागमसंज्ञा प्रमाणमेव, तथा वेदबौद्धादिषु शास्त्रनिबद्धा प्रसिद्धिः स्वयूथ्यान् प्रति अबाध्यमाना प्रमाणं, न पुनस्तीर्थान्तरीयान् प्रति — बाध्यमानत्वात्, युक्त्यंशस्तु स्वयूथ्येष्वपि दुर्लभः परकीयबलवद्युक्त्यन्तरैर्बाधितः प्रसिद्धं नहि बाध्यते, तथा च हरिः

'धर्मस्य चाव्यवच्छिन्नाः पन्थानो ये व्यवस्थिताः ।
न तांल्लोकप्रसिद्धत्वात्कश्चित्तर्केण बाधते ॥'

इति, बौद्धसांख्यादिषु चाज्ञानकर्तृकत्वमेव साक्षाददर्शनात् कर्तुः प्रसिद्ध्यैव सिद्धत्वात् तस्याथ तत्कर्तृत्वप्रसिद्धेरज्ञातकत्वात् एकैव च तावती प्रसिद्धिः — सुगतेनोक्तमेतदनुष्ठानमिति, अनिबद्धा हि प्रसिद्धिः स्मृतिः शास्त्रविरुद्धापि विशिष्टदेशे तत्राबाध्यमाना प्रमाणमित्यर्थः ।

उदेति—तदाश्वस्तस्यैव तत्र अनुष्ठानयोग्यत्वात्, अन्यस्य[८५] तु दृढप्रतिपत्तिरूपत्वाभावात् अप्रमाणमेव तथाविमर्शनात्मकं शब्दनम्। ननु एवं तदेव शास्त्रं 'कंचित्प्रति प्रमाणं कंचित्प्रति न' इति स्यात्, न चैतद्युक्तम्—'अपक्षपातित्वात्प्रमाणस्य' इति, अतत्त्वज्ञोऽसि प्रतीतिवृत्तस्य, तथापि नोपेक्ष्यसे[८६], 'अपक्षपाति प्रमाणम्' इति कः अस्य वचनस्य अर्थः, किं यत् एकस्य नीलज्ञानं प्रत्यक्षरूपं तत् किं सर्वस्य नीलं भासयति धूमज्ञानं वा अग्निम्, 'त्वं प्रातर्निधिमनेन विधिना लब्धासे' इति च यः सिद्धादेशरूप आगमः स किं सर्वान्प्रति प्रमाणम्, अथ[८७] कस्यापि कदाचित् किंचित्, तथा इहापि दृढविमर्शनरूपं शब्दनम् आ—समन्तात् अर्थं गमयति इति आगमसंज्ञकं प्रमाणं सर्वस्य तावत् भवति, तत्र[८८] यथा

८५ अन्यस्य—अनाश्वस्तस्य।

८६ अज्ञस्य हि अज्ञानोद्धरणं स्वसंभावितप्राप्तये, अनुद्धरणं पुनर्नरकाद्यर्थप्राप्तये।

८७ पूर्वस्मिन् असंभावयमान आह अथेति।

८८ एतदेव द्रढयति तत्रेति।

मिथ्याज्ञाने सहायतां भजमानम् आलोकेन्द्रियादिकम् अप्रमाणतासचिवम् अप्रमाणं, न च एतावता सम्यग्ज्ञानस्वरूपस्य प्रत्यक्षस्य काचित् पक्षपातिता, तथा स एव ज्योतिष्टोमादिशब्दः शूद्रादेरदृढविमर्शात्मनि अत एव अप्रमाणे आगमाभासे साचिव्यं विदधदपि दृढविमर्शात्मकसत्यागमरूपशब्दनलक्षणप्रमाणोपयोगितायां प्रामाण्यं भजन् न पक्षपातापक्षपातदोषप्रतिक्षेपयोग्यः, सर्व एव हि आगमो नियताधिकारिदेशकालसहकार्यादिनियन्त्रितमेव विमर्शं विधत्ते—विधिरूपो निषेधात्मा वा, अत एव

'प्रसिद्धिरविगीता हि सत्या वागीश्वरी मता ।

८९ सम्यग्ज्ञायतेऽनेनेतीन्द्रियालोकादिकमुच्यते तदेव रूपं यस्य प्रत्यक्षस्य प्रत्यक्षनिमित्तत्वादिन्द्रियालोकादि प्रत्यक्षशब्देनोच्यते तस्येन्द्रियालोकादेर्न काचित्पक्षपातितेत्यर्थः ।

९० प्रसिद्धिरागम इति स्थितं, सा चानिबद्धा लोकप्रसिद्धिः स्मृतिशास्त्रविरुद्धापि विशिष्टे देशे काले वा तत्राबाध्यमाना प्रमाणम् । तथा च वाक्यपदीये—'काममागमनिःश्रयेण निर्मितमपि लोकाचारविरुद्धं चरणं प्रतिपद्यन्ते तत्र हि तावति देशे काले वा सा निरोद्धुमिष्टापि कस्यचिदनिरोध्या' तदुक्तम्

'प्रसिद्ध आगमो लोके युक्तिमानथ वेतरः ।
विद्यायामप्यविद्यायां प्रमाणमविगानतः ॥'

इति ।

तयेति यत्र[९१] हि यदा यत्तद्‌ग्राह्यमशंकितैः ॥'

इति श्लोके 'यत्र यदा' इत्युक्तम्, तेन— प्रत्यक्षा[९२]गमौ बाधकौ अनुमानस्य, इति तत्रभवद्भर्तृहरि-न्यायभाष्यकृत्प्रभृतयः, तस्मात् प्रमाणलक्षणे ज्ञाते सर्वं प्रमाणस्वरूपं ज्ञातं भवति किं विशेषलक्षणैः, यस्तु अविसंवादकत्वं तस्य लक्षणम् आह तेनापि '[९३]प्रापकत्वं प्रवर्तकत्वं

---

९१ सा च प्रसिद्धिः शास्त्रनिबद्धा वा लोकमुखपारम्पर्यप्रतिष्ठिता वा यथा यस्यार्थस्य प्रसिद्धिः प्रतीतिनिरूढियाँ सा तथैव तत्रार्थे प्रमाणमागमसंज्ञं, तस्याश्च तत्रार्थे न्यायोऽपि यथोपदिष्टानुवादकः क्वचिद्भवति यथेश्वरादिसद्भावे क्वचित्तदर्थादिकार्थेयत्तानियमे केवलैव सा लोकेऽपि सुखाम्नायमात्रागता, काचित् न्यायानुसृता भवति, यथा काश्मीरे धीवरस्य परिहारः प्रसिद्धः शास्त्राश्रितयुक्त्यनुगमश्च तस्य दशा जीवितस्य मत्स्यमारणाभ्यासेन पापिष्ठत्वात् न्यायाननुसृतां, यथा वा दक्षिणापथे मातुलदुहितुः पाणिग्रहणमिति।

९२ प्रत्यक्षागमयोर्यत् प्रकाश्यं च विमृश्यं च तद्यथाक्रमप्रकाशविमर्शमुखेनान्यापेक्षाशून्यं, प्रत्यक्षे हि प्रकाशद्वारेण विमर्शः, अन्यत्र तु विपर्ययः, अनुमाने तु नान्तरीयकवस्त्वन्तरप्रकाशविमर्शानुमेये प्रकाशविमर्शायोग इति सापेक्षत्वात् दूरेयं प्रमितिः प्रमेयात्, तत्रापि च नान्तरीयकताज्ञातं ज्ञानं दुर्लभमिति। न च वाच्यम्—आगमेऽपि शब्दविमर्शनपूर्वकमर्थविमर्शनमिति, तत्रापि सापेक्षतादि भवेदिति, नहि शब्दविमर्शनादपरमार्थविमर्शनं किंचिच्छब्दस्वपरविमर्शनात्मकत्वादिति। वाक्यपदीये च—'प्रत्यक्षमार्षं च ज्ञानं बाधकमनुमानमानस्येति' तत्र धूमं दृष्ट्वाग्नावनुमितेऽन्य आह 'योगिनिर्मितोऽत्र धूम' इति।

९३ लोके च पूर्वमुपदर्शितमर्थं प्रापयन् संवादक उच्यते, तद्वज्ज्ञानमपि प्रदर्शितमर्थं प्रापयत् संवादकमुच्यते, प्रदर्शिते चार्थे प्रवर्तकत्वमेव

प्रवृत्तियोग्यशक्यप्राप्तिकवस्तूपदर्शकत्वं' प्रमाणलक्षणं ब्रुवता न किंचित् प्रमाणाभिमतबोधविश्रान्तं स्वरूपम् उक्तम्, तत् चेत् अनेन लक्षणेन निर्वाह्यते तत् निर्व्यूढं भवति, अन्यथा मुखभङ्गमूर्धकम्पाङ्गुलीमोटनादिमात्रतत्त्वं तत्, इति अलं विस्तरेण ॥ २ ॥

ननु च 'एकाभिधानविषये मितिः' इति यत्[९४] उक्तं, तत्र — एकमभिधानं बाह्ये स्वलक्षण एव प्रवर्तते यदि, तत्कथम् उक्तं — प्रत्याभासं प्रमाणम्, आभासमिश्रीकरणाभासस्तु स्वलक्षणम्[९५]? इत्याशङ्कां शमयन् प्रमाणस्य यत् प्रमेयं तत् परमार्थतो निरूपयितुम् आह

यथारुचि यथार्थित्वं
यथाव्युत्पत्ति भिद्यते ।

---

प्रापकत्वं नान्यत् अविसंवादि विज्ञानं प्रमाणमिति सौगताः, असंवादित्वं च किमित्याह — प्रापकत्वमित्यादि ।

९४ अविसंवादि विज्ञानं प्रमाणमिति सौगताः ।

९५ अयं भावः—अनेकदेशकालादिसामान्याभासे सामानाधिकरण्यमेव स्वलक्षणं, लोके पुनरेकरूपाभासतयैव अविचारितप्रसिद्धेर्घटादौ तदेकदेशभूतपृथक्पृथक्प्रमाणविषयानेकदेशादिसामान्याभाससंभवसमर्थनं तत एव कृतं करिष्यति चोत्तरसूत्रेणेति ।

**आभासोऽप्यर्थ एकस्मि-न्ननुसंधानसाधिते[९६] ॥ ३ ॥**

यद्यपि घट इति बहिः परिदृष्ट एको[९७]ऽर्थः तथापि तावानेव असौ न, अपि तु पृथक् निर्भ[९८]ज्यमानतामपि सहते, त[९९]थाहि – स्वतन्त्रं वा विवेचनम् अर्थित्वानुसारेण वा पूर्वप्रसिद्ध्युपजीवनेन वा, तत्र त्रिधापि विवेचने क्रियमाणे पृथगेव भान्ति आभासाः, ननु एवं चेत् कथम् एकं स्वलक्षणम्? उ[१००]च्यते – तेषां पृ-

---

९६ घट इत्यापाते यद्यपि एक एवार्थं इति लोकस्याभ्यासात् अविवेकितया प्रसिद्धिः तथापि असौ विवेकेन पृथङ्निर्भज्यमानतां न न सहते विवेकश्च त्रिधा – स्वातन्त्र्येण अर्थित्वानुसारेण पूर्वप्रसिद्ध्युपजीवनेन चेति तर्हि एकत्वमर्थस्य कथम्? आह – आभासानां पृथक् भासमानानां प्रकाशप्रमाणभूतो विमर्शः कदाचित् प्रत्याभासं विश्रान्तो यत्र सामान्यव्यवहारो जातुचित् गुणप्रधानतया, अत्रेदमित्थमिति व्यामिश्रणाप्राणोऽनुसंधाननामा तत्रान्त्येन साधिते एकस्मिन्नपि स्वलक्षणात्मन्यर्थे रुचिं स्वातन्त्र्यं वार्थक्रियार्थित्वं वा वृद्धव्यवहारं वानतिक्रम्याभासा भिद्यन्ते इति सूत्रार्थः ।

९७ आभासे हि लोकस्याभ्यासादविवेकितया एक इति प्रसिद्धिः । तावानिति एकत्वविशिष्टो घट इति ।

९८ विवेकिनां विवेकेन ।

९९ त्रिधा च विवेक इत्याह तथाहीति ।

१०० अयमाशयः – यदि हि एकत्वं पृथगाभासमानानामाभासानां विमर्शानुप्राणितं नानुवर्ति स्यात् तत् कथं पृथगाभासाभासे पटाभासोऽपि

थक् भासमानानामपि आभासानां यो विमर्शः अनुप्राणितभूतः स कदाचित् प्रत्याभासमेव[१०१] विश्राम्यति, तदा परापरसामान्यव्यवहारः[१०२], कदाचित् पुनः गुणप्रधानतापादनेन 'अत्र इदम् इत्थम्' इति व्यामिश्रणाप्राणो विमर्शः तदा तदेकं स्वलक्षणं, अपिः भिन्नक्रमः, अनुसंधा[१०३]-

---

तथा न स्यात्, इत्युपपादितक्रमेणाभासवैचित्र्येऽपि एकप्रत्यवमर्शवशादेकतानपाय इति ।

१०१ प्रत्याभासमेवेति अनेकसंनिवेशमृण्मयत्वदेशाद्याभाससंचयरूपमेकं घटाभासविशेषस्वलक्षणं यद्दृश्यते तत् कथं पृथुबुध्नोदराकारसंनिवेशविषयः कथं वा काठिन्यविशेषाभासमयमृण्मयतारूपं स्यात् अन्यादृश एव हि अयं पृथुबुध्नोदराकाराभासः काठिन्यविशेषदेशकालाद्याभासैर्विशेषीकृतोऽभिमतोऽर्थ इति ।

१०२ सामान्यं हि द्विविधं—परमपरं च तत्र परं सत्ता अपरं च द्रव्यत्वादि ।

१०३ अनुसंधानेनेति । पृथुबुध्नोदराकारतासंनिवेशविशेषाभासतामात्रे व्यवहृतमृण्मयताद्याभासविशिष्ट एकस्मिन्नन्यादृशाभासेऽपि पृथुबुध्नादिविषयीकृतापूर्वप्रतिपन्नसामान्याकारतद्रूपा विभिन्नैव भवति, मृण्मयतापि एकत्र स्वलक्षणात्मनि मृण्मयतापरामर्शावसेया पूर्वैकरूपैव । एवं महत्त्वलोहितत्वाद्येकानेकसामान्यविषयावधारिता अपि अत्रैकत्रान्यादृशाभासे प्रवर्तमानाः परामर्शास्ते पूर्वप्रतिपन्नविविक्तविविधस्वविषयैः सामान्यैः सहैकत्वमुपयान्ति तदेव सामानाधिकरण्यमुच्यते पुनस्तस्मिन्नेकरूपतयावभासमानेऽपि स्वलक्षणे स्वेच्छामात्रादेव भागशो दृष्टिविनिपातेन यथा सामान्यरूपमात्रावलोकनप्रयत्ने तथैव चित्रसंनिवेशात्मना सामान्यपदार्थमात्रतया तदवभासते, तथाहि एकस्मिन्नेव अविभागावभाते भित्तितले कल्पनामात्रविन्यस्ततनुतररेखाविभक्तं विचित्रपुरुषह-

नेन मिश्रताविमर्शेन साधितो य एकोऽर्थः स्वलक्षणात्मा तत्र एकस्मिन्नपि सति रुचिं-स्वातन्त्र्यम्, अर्थित्वम्–अर्थक्रियाभिलाषपरवशतां, व्युत्पत्तिं[104]–वृद्धव्यवहारशरणतां च अनतिक्रम्य भिद्यत एव आभासः॥ ३॥

क्व यथा? इति निदर्शयितुम्[105] आह

दीर्घवृत्तोर्ध्वपुरुष-
धूमचान्दनतादिभिः।
यथाभासा विभिद्यन्ते
देशकालाविभेदिनः॥ ४॥
तथैव सद्घटद्रव्य-
काञ्चनोज्ज्वलतादयः।

---

स्यश्चाद्यवभासाश्चिन्नालेख्यसंज्ञाः समुल्लसन्ति विभक्तावयवमपि स्वलक्षणमरूपमात्रतया च यदाध्यैते तदा तथैवाभाति अविशेषेणैवावभाससामान्यान्यपि वृक्षस्वलक्षणात्मनि व्युत्पत्तिनिपुणीकृतचेतसां धवखदिरपलाशादिभिन्नावभासानि प्रथन्ते इति भावः॥

१०४ इदमस्याभिधेयस्याभिधानमिति वृद्धोपदेशादायात ईश्वरसंकेतो व्युत्पत्तिः तया विना व्यवहारासंभवात्।

१०५ पूर्वोक्तमेवार्थं दृष्टान्तेन स्फुटीकर्तुमाह, दृष्टान्तेन हि पक्षीकृतः संदिग्धत्वात् सपक्षीक्रियते इति भावः।

आभासभेदा भिन्नार्थ-
कारिणस्ते पदं ध्वनेः[१०६] ॥ ५ ॥

इह तावत् एकस्मिन्नपि चेतनतया प्रसिद्धे पुरुषस्वलक्षणे विततदेशव्यापितां दीर्घतामेव[१०७] कदाचित् विमृशति, या—तरूणामपि अस्ति, निःसंधिबन्धरूपतां[१०८] वा वृत्ततां, या—शिलानामपि[१०९] संभविनी, ऊर्ध्वदिगाक्रमणरूपां[११०] वा ऊर्ध्वतां, या—स्थाणोरपि संबन्धिनी गमना-

१०६ विमर्शस्य, अत्र श्लोकद्वये यथातथाशब्दौ दृष्टान्तदार्ष्टान्तिकतां द्योतयन्तौ प्रसिद्धेनाप्रसिद्धमनुमीयते इत्येतदर्थं पूर्वेण जडाजडगतो भेदः प्रसिद्धः कथितः अपरेण घटगतोऽप्रसिद्धो भेदः कथित इति भावः ।

१०७ ऊर्ध्वावयवेषु अवहितनेत्रस्य दीर्घः प्रतिभासते भागान्तरे देशपरिहारेणायं प्रत्ययः, अत्र चक्षुषो मनसश्च प्रणिधानेनेयं प्रतीतिः ।

१०८ अदृश्यसंधिस्थानम् ।

१०९ इयदन्तं यथारुचि इति व्याख्यातम् ।

११० ऊर्ध्वदिगिति, अत्र मूलकारोत्पलमतं दीर्घवृत्तेति यथारुचि ऊर्ध्वपुरुषेति यथार्थित्वं व्याख्यातं तथाहि देशाद्यभेदेन त्वेक एव पुरुषोऽर्थितावशात् ऊर्ध्वताद्याकारैः बहुधावभाति कदाचित् चिह्नमात्रत्वेनोपयुज्यते यथामुं प्रदेशं गच्छ यत्रायमूर्ध्वरूपोऽर्थः कदाचित् तिरोधानार्थी बहुतरमविचार्य तमूर्ध्वावभातमाश्रित्यान्तर्धत्ते अन्यदा घृतादेरातपपरिहारमिच्छन् घनोर्ध्वतामात्रसाध्यं छायामात्रमेव वाञ्छति पुरुषकार्यैच्छायां त्वाश्रितनैपुणस्य विभक्तावयवोऽसौ पुरुषाकार एवावभातीति ।

गमनादिस्वतन्त्रभावयोग्यतारूपं वा पुरुषत्वं, यत्—अन्यपुरुषसाधारणं, तथाहि—स्वतन्त्रया वा इच्छया रुचिरूपया एवं कुर्यात्, यथोक्तं

'या तु व्याक्षेपसारत्वाच्चेतसः स्वरसोद्गता ।'

इति, विततदेशव्यापिन एव वा अर्थान् तिरोधिलक्षणाम् अर्थक्रियाम् अर्थयमानो विभजेत्, एवं व्यवहारे वृद्धैः कीदृक् दीर्घं नाम गीयते इति व्युत्पित्समानो व्युत्पादयितुमिच्छुः वा विभागं कुर्यात्, इत्येवं—तत्र[111] आभासानां भेदः, एकस्वलक्षणं[112] तु—एकस्मिन् देशाभासे कालाभासे च विश्रान्तेः, देशकालाभासावेव हि सामान्यरूपताप्रयोजकव्यापित्वनित्यत्वखण्डनाविधानसविधवृत्ती विशेषरूपतां वितरतः, एवं पुरुषत्ववत् अन्येऽपि ब्राह्मणाद्याभासा अपि निरूप्याः, एवम् अत्र[113] तावत् प्रसिद्धतर

---

१११ तत्रेति व्युत्पत्तौ ।

११२ यथोक्तमष्टसहस्र्याम्—अत्र चैकस्वलक्षण एवावभासभेदो न तु देशकालभेदानवमर्शात् स्वलक्षणान्तरत्वम् अत एव वृत्तौ स च देशकालभेदं तथा भिद्यमानोऽपि न स्पृशतीति अत्र च संनिवेशाभासभेदेऽपि देशभेदाभासोऽप्यस्ति केवलं नावमृश्यते तत एकामर्शबलादेव एकस्वलक्षणत्वमिति ।

११३ अत्रेति पुरुषस्वलक्षणे ।

आभासभेदो – जडाजडसाधारणबहुतरधर्मास्पदत्वात्, [114]अनेन निदर्शनेन धूमेऽपि धूमत्वचन्दनत्वश्रीखण्डचन्दनोत्थितत्वादयः प्रसिद्धा आभासभेदा विभजनीयाः, अनेन[115] तु प्रसिद्धेन दृष्टान्तेन अप्रसिद्धभागोऽपि यो घटः तत्रापि आभासभागभेदो भवति, तथाहि – किंचिदपि अत्र नास्ति इति ह्रद्धङ्गमिव आपद्यमानो घटं पश्यन् 'अस्ति इदम्' इति सत्त्वाभासमेव पश्यति, अपरान् आभासान् नाम्नापि तु न आद्रियते, तथा उदकाहरणार्थी घटाभासम्, स्वतन्त्रनयनानयनयोग्यवस्त्वर्थी द्रव्याभासम्, मूल्याद्यर्थी काञ्चनावभासम्, हृद्यतार्थी औज्वल्याभासम्, आदिग्रहणात्

११४ अनेनेति प्रसिद्धतरेण प्रसिद्धस्य धूम इति धूमस्वलक्षणे, यथोक्तं टीकाकृता – धूमचान्दनतादीनामपि प्रसिद्ध एवाभासभेदो जातिव्यक्तिरूपत्वादेवंजातीयानां, तथापि एकावमर्शादेकत्वं तथा च सधूमत्वं जातिः चान्दनत्वं च व्यक्तिरित्येकस्वलक्षणतेति एवमनुपलक्ष्याप्रसिद्धाभासभेदेपि एकस्वलक्षणे धर्मभेदेष्ववभासभेदसंभवो विधित्साद्याश्रयेणानुसरणीयः तत्संभवाच्च प्रत्याभासमर्थक्रियाभेदात् तदार्थिनां व्यवहारार्थं वाचकशब्दभेदविनियोगोऽवगन्तव्यः तदाह वृत्तौ तथैव घट एव सन्नित्याभासोऽन्यादृगेव पटाद्यनन्ताशेषार्थमात्रासाधारणः सत्तामात्रसाध्यसत्परामर्शाद्यर्थक्रियाकारीति।

११५ दृष्टान्तश्लोकं व्याख्याय दार्ष्टान्तिकश्लोकं व्याचष्टे अनेन त्विति।

दृढतरभावार्थी दार्ढ्याभासम् इति द्रष्टव्यम्,[११६] एवं रुचिव्युत्पत्त्योरपि योजनीयम्, एवम् एते आभासभेदा एव वस्तु – आभासमानतासारत्वात् वस्तुतायाः, योऽपि आभासस्य प्राणभूतो विमर्शः सोऽपि प्रत्याभासमेव – शब्दस्य अभिजल्पात्मनो बोधजीवितप्रख्यस्य प्रत्याभासमेव विश्रान्तेः, सन् घटो लोहितः इत्याद्यर्थक्रियाकारित्वमपि अन्वयव्यतिरेकाभ्यां प्रत्याभासमेव नियतं – सदाभासेन[११७] हृद्धङ्गपरि-

---

११६ अयमत्राशयः – सन् घट इत्यत्र अर्थक्रियां साधयति न चात्र अवभास्यवैलक्षण्यं नेति वक्तव्यम् अतोऽत्राहुः शब्दः केवलः सन् इति, तदर्थमाह हृद्धङ्गमिति, नहि सन्नित्याभासः शब्दमात्रभेदे घट इत्यवभासात् विशिष्यते तथाहि द्वयोः पणपूर्वके विवादे गृहेऽत्र न किंचिदस्ति किंचिदस्तीति वचनात् संभाव्यार्थक्रिया सदित्याभासस्य देशकालाद्यवच्छेदेन विशेषीभूतस्य तदभावेन वा सामान्यरूपस्य परस्परं विलक्षणात्यतश्च पटाद्याभासादस्त्येवार्थक्रियेति स्वयमेवोत्तरत्र समर्थयिष्यत्येतदाचार्यः ।

११७ ननु च सदित्याभासान्तर्वर्ती सत्परामर्शः स कथमर्थक्रियेत्युक्तः अर्थक्रिया हि कार्यं न पुनः स्वभावः ततश्चास्तु घटः सन्नित्येतावता किं नः सिध्यति अस्ति हि देवदत्तस्य सर्वोत्कृष्टगुणशालिनी मनीषेत्यत आह हृद्धङ्गपरिहारेति सत्ता हि प्रबन्धप्रवृत्तः परामर्शरूपो व्यवहारः शून्यताविपरीतात्मा सत्तात्मकः ततश्च शून्यत्वसंभावनासंजातहृद्धङ्गपरिहारनिमित्तभूतायाः सत्तायाः केनार्थक्रियाकारित्वमपह्नूयते ।

हारमात्रस्य संपादनात्, तत्र[११८] आभासान्तरस्य या अपेक्षा सा अन्याभासेन — अर्थक्रियायां साध्यायां पात्राभासस्य[११९] इव तदाभासनान्तरीयकत्वेन आभासान्तरस्याप्यनियतस्य अपेक्षणात्, एवं येन येन मुखेन अर्थो विचार्यते तेन तेन आभासमात्रात्मैव — तथैव प्रतिभासनात् विमर्शनात् अर्थक्रियाकरणाच्च, इति[१२०] सिद्धम्, एवं प्रसिद्धतरप्रसिद्धाप्रसिद्धत्वातिशयेन[१२१] एकोऽपि अर्थो ग्रन्थकारेण त्रैधं निरूपितो 'दीर्घवृत्तेति धूमेति सद्घटेति' ॥ ५ ॥

ननु[१२२] एवं प्रत्याभासमेव वस्तुत्वे एको घटात्मा[१२३] न वस्तु स्यात्? इत्याशंक्याह

---

११८ ननु सत्ता सर्वविषया किमनया विषयीक्रियते येनार्थक्रियावत्त्वमस्या अभ्युपगच्छाम इत्याशङ्क्याह तत्रेति ।

११९ वह्न्यानयने पात्रानयनमिलिवत् । न च सर्वथा सत्तापह्नव इत्याह तदाभासनान्तरीयकत्वेनेति नान्तरीयकेति अव्यतिरिक्तत्वेनेति ।

१२० प्रतिभासनात् प्रमाणनिरूपणं विमर्शनात्प्रमानिरूपणम् अर्थक्रियाकरणात् स्वरूपनिरूपणम् ।

१२१ विशेषेण ।

१२२ तदित्थं यथारुचि यथार्थित्वं यथाव्युत्पत्ति भिद्यते आभास इति श्लोकद्वयेन समर्थितम्, इदानीमर्थं एकस्मिन्ननुसंधानसाधिते इत्येतद्विवृणोति तत्र तावत्तत्तदर्थसाधनार्थमाक्षेपपूर्वमाशङ्कामुत्थापयति नन्वेवमित्यादि ।

१२३ घटात्मेत्युपलक्षणं तेन लोहितत्वाद्यात्मेति च बोध्यम् ।

आभासभेदाद्वस्तूनां
नियतार्थक्रिया पुनः ।
सामानाधिकरण्येन
प्रतिभासादभेदिनाम्[124] ॥ ६ ॥

आभासानां मिश्रं यद्रूपं तत्र अवश्यं कश्चिदाभासः प्रधानत्वेन[125] अन्याभासानां विश्रान्तिपदीकर्तव्यः स तेषां[126] समानमधिकरणं, तेन सह यस्तेषां संबन्धः तत् सामानाधिकरण्यं, तेन उपलक्षितो यः प्रतिभासः — अर्थोन्मुखः प्रकाशः तदनुप्राणकश्च कश्चन पदात्मा परामर्शः— तस्य सर्वस्य एकाभासविश्रान्तताऽनियमात्, तस्मात् तं सामानाधिकरण्याभासं समनुप्राणयति वाक्यात्मा वाक्यार्थपरामर्शरूपो विमर्शः — इह इदानीं एष घटोऽस्ति इत्ये-

---

१२४ अत्रायं भावः—आभासभेदनिबद्धोऽर्थक्रियाभेद आभासाश्च परस्परासंपृक्ताः सामान्यरूपा एव तेषां पुनः परस्परसंपर्के सामानाधिकरण्यादेकस्वलक्षणवस्तुरूपतेति सूत्रार्थः । अत्र नियतेति समुदायरूपा नियता एकैकमात्रस्वरूपा च ।

१२५ प्रधानत्वासंभवेऽन्योन्यासंसर्गिणो हि आभासा निरन्वयविनाशिनः स्युः नियन्तृराजासंभवे इव प्रजास्तद्वद्धर्मांश्चेति ।

१२६ तेषामित्याभासानाम् ।

वंरूपः, ततो हेतोः ये अभेदिन एकस्वलक्षणताम् आप्ता न तु स्वरूपभेदम्[१२७] उज्झन्तः तेषाम् अन्याविशिष्टा समुदितरूपा अर्थक्रिया, आभासविमर्शभेदे पुनरन्या नियता एकैकमात्ररूपा, आभासप्रतिभासशब्दाभ्यां सूत्रे विमर्शोऽपि आक्षिप्तो मन्तव्यः, पुनःशब्दो[१२८] विशेषद्योतकः काकाक्षिवत् उभयत्र योज्यः, बहुवचनेन[१२९] ऐक्येऽपि स्वरूपभेदापरित्याग उक्तः, तत्र च ऐक्यावभासे[१३०] परतन्त्रं सत् पृथक्त्वं यदा आभासानां तदा समानरूपव्यक्त्युप[१३१]रञ्जकत्वेन पारमार्थिकं सामान्यरूपत्वम्, घटाभासस्य तु शुद्धस्य स्वतन्त्रपरामर्शे[१३२] योग्यतामा-

---

१२७ स्वरूपभेदमिति पृथक्पृथग्वर्तमानम् । नियतेति सूत्रैकदेशः सामर्थ्यादर्थद्वयेन संयुनक्ति तेषामित्यादिना ।

१२८ एतयोरेव परस्परं स्वलक्षणपृथगाभासत्वयोः । काकाक्षिवदिति सामानाधिकरण्येन प्रतिभासादभेदिनामित्यत्र नियतार्थक्रिया पुनराभासभेदाद्वस्तूनां भेदिनां नियतार्थक्रिया चेति ।

१२९ अभेदिनामित्यत्र ।

१३० स्वालक्षण्ये । पृथक्त्वमित्याभासमात्ररूपत्वम् ।

१३१ तच्छब्दस्याध्याहारोऽत्र कर्तव्यः यदा तु तत्समानरूपेति पाठस्तदा सर्वं स्वस्थम् ।

१३२ पृथगाभासराहित्ये सामान्यतानुप्रवेशासंभवे इत्यर्थः ।

त्रेण सामान्यरूपता न वस्तुतो–द्रव्यादन्यो हि सर्वः पदार्थः परतन्त्रतासारः, एवम् एकोऽपि घटात्मा इत्यपि सत्यमेव – आभासविमर्शार्थ-क्रियाबलेन तथा अवस्थापनात् इति ॥ ६ ॥

ननु एकेनैव अर्थक्रिया न तत्र[133], अपि तु आभाससमुदायात् अर्थक्रियासमुदायः, आभासाश्च भिन्ना अपि यदि एकाम् अर्थक्रियां कर्तुं मिश्रीभवन्ति, तदा कस्तेषाम् इयत्तावधिः[134]? इति चोद्यम् अपवदति

पृथग्दीपप्रकाशानां
स्रोतसां सागरे यथा[135] ।
अविरुद्धावभासाना-
मेककार्या तथैक्यधीः[136] ॥ ७ ॥

---

१३३ यत्क्रियायै स्वलक्षणमेकमङ्गीक्रियते, एकेनैकार्थक्रिया न भवतीति संबन्धः, ततश्चेदमुक्तं भवति एकक्रियायै हि स्वलक्षणमेकमङ्गीक्रियते एकक्रियाभावे पुनः कृतमेकेन स्वलक्षणेनेति ।

१३४ इयत्तेति नियमकारणम् । यथानेकस्यैकताप्रसिद्धिः तथा साधनेन चोद्यं निराकरोतीत्यर्थः ।

१३५ ऐक्यधीरिति संबन्धनीयम् ।

१३६ अत्र दृष्टान्तस्य दीपप्रकाशादेरविभागावभासव्याख्यानेन सूत्रे तथैक्यधीरिति दार्ष्टान्तिके यदैक्यमवभासमानं तद्दृष्टान्तेऽपि यथेत्यस्यानन्तरं प्रतिपत्तव्यम् अन्यथा दृष्टान्तता न सिध्येदिति ।

पृथक् वर्तिन्यो याः प्रदीपस्य प्रभाः सूक्ष्मतमा अवलोकनसामर्थ्याधानलक्षणां याम् अर्थक्रियां न कृतवत्यः तामेव[१३७] एकभवनाभ्यन्तरं संमूर्छितात्मानो विदधते, न तत्र[१३८] अर्थक्रियाणां समुदायोऽस्ति, सागरपतितानि च स्रोतांसि[१३९] बहुतरतरङ्गारंभार्थक्रियाकारीणि, तद्वत् घटः काञ्चनो लोहितः ततोऽयं शिवलिङ्गशिरःसमावर्जनोचितसलिलाहरणार्थक्रियोचितो दृष्टमात्र[१४०] एव तीव्रप्रीतिलक्षणार्थक्रियाकारी, इति – सिद्धमेवार्थक्रियाकारित्वम्, यत् पुनराभासानां मिश्रणे का सीमा[१४१] इति? तत्र उच्यते – येषाम् अविरोधः त एव आ-

---

१३७ तामित्यालोकनसामर्थ्यलक्षणामर्थक्रियाम् ।

१३८ यद्यर्थक्रियाणां समुदायः स्यात् प्रागपि पृथक्पृथक्तथार्थक्रियां विदध्युः ।

१३९ अत्रापि कोऽपि नास्त्यर्थक्रियाणां समुदायः ।

१४० दृष्टमात्र एव इति न केवलं चित्तावस्थायामेवैक्याभासो यावदिन्द्रियज्ञानावस्थायामपि तद्गतत्वेनैव चायं दृष्टान्तोऽपि योजनीय इति भावः ।

१४१ सीमेत्यवधिः ।





भासा मिश्रीभवन्ति, [142]नहि रूपाभासो मारु-
ताभासेन मिश्रीभवति—विरोधात्, [143]सोऽपि च
नियतिशक्त्युत्थापितः—[144]पृथक् ये दीपप्रकाशाः
तेषां संबन्धि [145]यदेकं सागरे स्रोतसां च यदेकं
[146]वस्तु तेन कार्या यथा ऐक्यधीः तथा अवि-
रुद्धा ये अवभासा घटलोहितकाञ्चनादयः
तेषां संबन्धि यदेकं [147]स्वलक्षणं तत्कार्या ऐक्य-

---

१४२ तत्राविरोधतापादनार्थं दृष्टान्त एवाविरोधेनैक्याभासं साधयति नहीत्यादिना तथाहि—नीलपीतादीनां सामान्याभासानामन्योन्यैक्यक्षमाणामपि विरोध एव नहि नीलपीतादीनां समवायः संबन्धः नापि गुणगुण्यादिभावेन सामानाधिकरण्यं सिंहो माणवक इति गुणगुण्यादिकल्पनयैवैक्यारोपणम्, तथाहि स्फुटमेवात्र प्रतीतिः गुडमरिचेक्षुरसादयः पानकारम्भिण एकत्वलक्षणामैक्यबुद्धिं जनयितुं समर्थाः तदेव पानकमव्युत्पन्नबुद्धिना संपादितं रसवैषम्येण—तत्र न पानकताबुद्धिः संभवति इत्यर्थः।

१४३ ननु यदि चाभासानां मिश्रीकरणं वस्तुत्वं तर्हि कथं विरोधाविरोधसंगतिरित्यत आह सोऽपीति सोऽपि विरोधः।

१४४ तात्पर्यार्थमाह पृथगिति।

१४५ एकमिति गृहे उन्मीलनात्मकं वस्तु।

१४६ वस्त्विति महाजलावयविरूपम्। तेनेति एकेन। ऐक्यधीरित्युपलक्षणं तेन तदुपलक्षित एकविमर्श एका चार्थक्रियेति बोध्यम्।

१४७ स्वलक्षणमिति मेलनात्मकम्। तत्कार्येति तेन स्वलक्षणात्मना मेलनेन।

धीरिति संबन्धः, ऐक्यधिया — प्रतिभासो विमर्शोऽर्थक्रिया च इति स्वीकृतम् ॥ ७ ॥

ननु एवं प्रत्याभासं प्रमाणस्य विश्रान्तत्वात्[१४८] अग्न्याभासे अग्निज्ञानं प्रमाणं धूमज्ञानं च धूमाभासमात्रे कार्यकारणभावावभासोऽपि तावन्मात्रे[१४९], ततश्च धूमाभासोऽपि अग्न्याभासं व्यभिचरेत् इत्यादिबहुतरोपप्लवप्रसंगः ? इति शंकां व्यपोहितुम् आह

तत्राविशिष्टे[१५०] वह्न्यादौ
कार्यकारणतोष्णता ।
तत्तच्छब्दार्थताद्यात्मा
प्रमाणादेकतो मतः ॥ ८ ॥

तत्रेति — प्रत्याभासं प्रमाणं विश्राम्यति, इत्यस्मिन्नपि पक्षे न कश्चित् दोषः, तथाहि — अविशिष्टो यद्यपि वह्न्याभासो दे-

---

१४८ एकैकसामान्यविषयत्वात् प्रत्यक्षस्य पृथक् प्रमाभ्युपगम इति ।

१४९ तावन्मात्र इति स्वे स्वे नियते विषये ।

१५० सामान्यमात्रे ।

शकालाभासप्रमुखैः[151] आभासैः असंकीर्णत्वेन सामान्यमात्ररूपत्वात् तथापि स एव आभासो यावद्भिराभासैरविनाभूतो[152] भगवत्या नियतिशक्त्या नियमितः तावतोऽवभासान् स्वीकृत्यैव प्रमाणकृतां निश्चयपदवीम् अवतरति, तथा च —वह्न्याभास इन्धनकार्यत्वाभासेन धूमकारणताभासेन उष्णस्वभावताभासेन च स्वाभाविकाव्यभिचरितसाहचर्यः[153] प्रतीयमानो

---

१५१ देशकालाभासेति विशेषरूपाणामेवासंकीर्णत्वं न तु सामान्येन यतो हि अत्र देशकालविशेषानवच्छेदेऽपि देशकालसामान्याभासयोगो भवेदेव न च सामान्यताहानिः तथाहि देशकालसामान्याभासश्च अर्थस्य स्वरूपभेदावभास एव नहि देशकालौ नाम स्वतन्त्रौ वस्तुस्वरूपौ स्तः अपि तु मूर्त्यवभासभेदो देशभेदः क्रियावभासभेदश्च कालभेदः अवभासभेदश्च स्वत एव सिद्ध इति विशेषरूपाणामेव देशकालादीनां प्रतिक्षिप्यमाणमत्र तथा च तैर्भिन्नैर्देशकालरूपैरर्थैः दण्डेनेव पुरुषस्य भेदावभासेनैव योगः भिन्नेन च भूतलादिना देशेन दिवसादिना च भिन्नेन कालेन योगः दूरदूरतरासन्नासन्नतरत्वादिना तदेतत्सिद्धं स्वात्मनि चाभासभेदात् देशकालसामान्यात्मकं तथैव चाभासाः भिन्नदेशकालयोगस्तु दण्डपुरुषन्यायेन तथा च स्फुटाभासेन भूतलेन सह भासमानो घटस्तद्देशो नान्यदेशः तथा स्फुटाभासेन सूर्यसंचारादिना इति ।

१५२ कार्यकारणतारूपैः ।

१५३ तत्रेन्धनकार्यताधूमकारणताभासोऽपि वस्त्वन्तरापेक्षः उष्णताभासस्त्वनपेक्ष इति बोध्यम् । अत्राग्न्याभास एतावानकृत्रिमः सर्वदेशकालगतो नियतिशक्त्या कृतः । सर्वत्र देशे सर्वकाले च इन्धनकार्यत्वधूमकारणत्वोष्णस्वभावत्वस्यैकतया प्रतीतत्वात् स्वाभाविकाव्यभिचारि साहचर्यम् ।

विश्वत्रैव सर्वदैव च तथा प्रतीतो भवति—एकत्वात् तस्य[154], अस्वाभाविकोऽपि यः स्वभावः पुरुषकृतसमया[155]दिमुखप्रेक्षी, तद्यथा—अग्निशब्दवाच्यत्वं घटप्रतिपत्तिकारित्व[156]मित्येवमादिः; सोऽपि एकप्रत्यक्षादेव निश्चीयते, तस्य हि प्रमातुः कृत्रिमेण[157] इतरेण वा रूपेण—आभासान्तरनान्तरीयकतया असौ वह्न्याभासः संविदितः सर्वदेशकालगतः तथैव संविदितः, [158]इति तत्र किं प्रमाणान्तरेण—तस्य तस्य यथेच्छं पुरुषसमयेन नियुज्यमानस्य शब्दस्य अर्थोऽयं ज्वलद्भास्वराकार आभास इत्यनेन

---

१५४ तस्येति त्रिकस्य ।

१५५ समयेति संकेतः । अग्निशब्देति वह्निशब्दाभिधेयताभासः,

१५६ कारित्वमिति प्रदीपादिरूपेण । तदीयप्रकाशेन हि तत्तद्घटादिप्रतिपत्तिरिति तत्प्रतिपत्तिकारी भण्यते यद्यपि उष्णत्ववत् सोऽपि स्वभावमध्ये निक्षेपार्हस्तथापि घटाद्यपेक्षया स्वभावमध्ये न गणितः ।

१५७ कृत्रिमेणेति समयमुखप्रेक्षिणा, इतरेणेति कार्यकारणतोष्णताभ्याम्, कार्यकारणतोष्णताद्याभासवर्गस्याकृत्रिमत्वं, तत्तच्छब्दार्थताभासस्य च कृत्रिमत्वम् ।

१५८ कालान्तरेऽपि प्रथमप्रवृत्तस्यैव व्यवस्थापकत्वात् किं प्रमाणान्तरेणेति यथा चाक्ष्यादिरूपादिसामान्ये तथौष्ण्यादिसिद्धौ तथौष्ण्यादिसामान्येऽपीति हि अकस्मादेव स्वकात् प्रमाणादग्निरूपसामान्यसिद्धिः तथेन्धनकार्यकारणत्वादिस्वभावोऽपि अस्य प्रमाणादेव सिध्यतीति ।

नियतिशक्तिरेव सर्वत्र शरणम् इति पिशुनयति, एतदुक्तं भवति—यत्किंचित् कृत्रिमम् इतरद्वा भावाभासस्य आभासान्तरेण नान्तरीयकत्वं[१५९] प्रतिभाति तत्र नियतिशक्तिमात्रमेव परं विजृम्भते, तत्तु नियतिशक्तिरूपं पूर्वापरविततकालम्—इन्धनकार्यत्वे धूमकारणत्वे उष्णस्वभावत्वे च आभासमाने, अनतिचिरकालं तु वह्न्यादिशब्दवाच्यत्वाभासादाविति विशेषः, ततश्च नियतिशक्त्युपजीवनेन धूमाभासोऽपि अग्न्याभासाव्यभिचारी इति न कश्चित् विप्लवः, कार्यता कारणता उष्णता च तस्य तस्य शब्दस्यार्थता तत्तच्छब्दाभिधेयता, आदिग्रहणात्—गन्धरसशून्यता ऊर्ध्वदिक्संयोगिता जलविरोधिता च, इत्येवं-भूतो य आत्मा स्वभावो वह्न्यादौ स एकस्मादेव प्रमाणात् मतः—संविदित इति यावत्, 'अर्धे च्छेदः' इति, काव्ये अयं समयो[१६०], न ग्रन्थे, इति—द्वितीयतृतीयपादयोः सामस्त्येऽपि अदोषः,

१५९ अव्यतिरिक्तत्वम् ।

१६० अर्धे युक्त—पादवृत्तान्ते विश्रान्तिरिति, समयः नियमरूपः संकेतः ।

पृथग्भावप्रत्ययप्रयोगो — वस्त्वन्तरापेक्षानपेक्षातः कृतकत्वा[161]कृतकत्वाभ्यां वर्गभेदं सूचयितुम् ॥ ८ ॥

एवं भावस्वभावव्यवस्थापनं प्रत्याभासविश्रान्तेन एकेनैव प्रमाणेन क्रियते, तेषामपि आभासानां यथोचितं यत् [162]अन्योन्यनान्तरीयकत्वं तत् एकेन संवेदनरूपेण तदनेकप्रमिताभासविषयपूर्वप्रवृत्तसंवेदनकलाप[163]ानुप्राणकान्तर्मुखस्वरूपेण निश्चीयते, तच्च[164] ऐक्याभासमात्रे अनुसंधानरूपं प्रमाणं, अनुसन्धीयमानेषु तु आभासेषु[165] गृहीतग्राहित्वात् अ[166]प्रमाणं, तत्र तु प्रत्येकं प्राच्यमेव प्रमाणं, भावस्वभावव्यवस्थापनात्मकमानसप्रवृत्त्यति-

---

१६१ कृतकत्वमिति पौरुषेयत्वम्।

१६२ अविरोधितया परस्परस्वभावनियमः। तदेकेनेति प्रकाशरूपेण बहिर्मुखेन।

१६३ कलापेति भिन्नप्रमाणानाम्। अन्तर्मुखेति विमर्शस्वरूपेण।

१६४ तदिति संवेदनम्।

१६५ स्मृत्यादौ।

१६६ स्वसंवेदनेन हि प्रत्याभासं गृहीतग्राहिणापि मिश्रणांशे प्रमाणभावभाक्त्वेनैव जायते, इत्येवमन्तर्मुखं मानसप्रवृत्तौ प्रमाणोपयोग उक्तः।

रिक्तकायप्रवृत्त्युपयोगस्तु यथा प्रमाणविषयः तं प्रकारं दर्शयितुम् आह

सा तु देशादिकाध्यक्षा-
न्तरभिन्ने स्वलक्षणे ।
तात्कालिकी प्रवृत्तिः स्या-
दर्थिनः.............

बाह्या तावत् अर्थक्रिया स्वलक्षणतः, स्वालक्षण्ये[१६७] च देशकालाभासयोजनस्यैव अन्तरङ्गत्वम् तत्रापि[१६८] च विशेषरूपतापि परामर्शं विना न किंचित्, परामर्शद्वारेण तु प्रमातरि विश्राम्यन्ती, प्रमातुः संवेदनैकरूपस्य देशकालायोगेन ऐक्यात् अभ्युज्झत्येव विशेषरूपताम्[१६९], इति — सर्वत्र अद्वयं परमार्थतः, तथापि

१६७ विशिष्टरूपस्य देशकालाभासस्य भूतलादेर्दिवसादेश्च प्रधानत्वम् ।

१६८ ननु चैवं देशकालाभासस्य बाह्यस्यैव प्राधान्ये यदुक्तं 'सोऽन्तस्तथा विमर्शात्मा देशकालाविशेषिणी' इत्युक्तं विघटते, अत्र बाह्यतया प्रमाणफलस्य प्रमालक्षणस्यासिद्धेरित्याशङ्क्याह तत्रापीति ।

१६९ प्रमातरि विश्राम्यन्ती चेत् तर्हि प्रमात्रन्तर्निमज्जनेन प्रमातृवत् तस्या अपि देशकालायोग इत्यर्थः अत एवोक्तम् विशेषरूपतामभ्युज्झतीति ।

तु या विशेषरूपता[१७०] भाति तस्याः परमेश्वरस्वातन्त्र्यमेव निमित्तं यत्, तत् 'मायाशक्तिः' इत्युच्यते, तत्र[१७१] विशेषसाध्यार्थक्रियाविशेषेण योऽर्थी तस्य या स्वलक्षणे तस्मिन् विशेषरूपे अर्थे तत्काल[१७२]भाविनी वाङ्मनःकायप्रवृत्तिः सा देशे, आदिग्रहणात् काले स्वरूपान्तरे, स्वरूपानुसन्धानादौ च यानि अध्यक्षान्तराणि बहूनि प्रत्यक्षाणि तेषां भिन्ने भेदे निमित्ते सति भवति, न अन्यथा, न एकैकतः[१७३] प्रमाणात् सा प्रवृत्तिः अपि तु प्रमाणसमूहादेव, [१७४]समूहता च परस्य न उपपन्ना; अस्माकं तु

---

१७० अयमर्थः – अर्थक्रियाकारिणामपि विशेषाणां प्रकाशपरामर्शमयस्वरूपविश्रान्त्या यद्यपि तद्रूपत्वं प्रक्षीणप्रायमेव तथापि तत्स्वातन्त्र्यापरपर्यायया मोहिनीशक्त्या दृढीक्रियत इवेति।

१७१ तत्रेति मायाशक्तिनिर्मितायां विशेषरूपतायाम्।

१७२ तत्कालेति न तु भावस्वभावव्यवस्थापनावत् कालान्तरेऽपि भाविनी तत्रोपयुज्यमाना वा, अत्र यद्यपि कायप्रवृत्तेरेव प्राधान्यं तथापि वाङ्मनःपूर्वकत्वात् तस्या एवमभिधानम्।

१७३ अन्यथात्वमेव स्वयं विवृणोति नैकैकत इत्यादिना।

१७४ ननु च देशाध्यक्षं देश एव विश्रान्तं कालाध्यक्षं काल एवेत्यन्योन्यमेषां वार्तानभिज्ञत्वात् कथमुक्तं समूहादिति परस्यैतदप्रतिसमाधेयं न तु अस्माकमिति दर्शयति समूहता च परस्येति, सौगतस्य मते सर्वस्य क्षणिकत्वात्।

एकस्वसंवेदनविश्रान्तिमयी सा युज्यते,—इति उक्तं प्राक्

'न चेदन्तःकृता............ । (२।३।७)

इत्यत्र। इयमेव च सा प्रमाणानां योजना, योजिका च युक्तिरित्युच्यते गन्धद्रव्यादि[१७५]-युक्तिवत्, एवं प्रत्यक्षसमूहादेव प्रवृत्तिरिति तात्पर्यम्। देशादिकेष्वपि अध्यक्षेषु सत्सु देशाभासयोजनायामपि[१७६] अन्तः प्रमातरि अभिन्नं यत् स्वलक्षणं तत्र,—इति वा संगतिः। देशादिकैरध्यक्षान्तरैः प्रत्यक्षीभूतैराभासान्तरैर्भिन्ने स्वलक्षणे निमित्ते सति प्रवृत्तिः,—इति वा योजना। अत्रापि प्रमेयबहुत्वनिरूपणदिशा तदनुयायित्वेन अभिधीयमानः प्रमाणसमूहो निमित्तत्वेन उक्तो भवति।

ननु किं प्रात्यक्ष्यामेव प्रवृत्तौ प्रमाणसमूह उपयोगी? न, इत्याह

.........अप्यनुमानतः ॥९॥

१७५ अनेकद्रव्याभासयोजनेनानेकद्रव्याभासवत्त्वेऽपि एकपिण्डात्मकमेकार्थक्रियाकारि गन्धद्रव्यं कथ्यते इति।

१७६ आभासयोजनया अविशेषरूपतायां सत्यामपीत्यर्थः। अभिन्नमिति तेषामेवाध्यक्षज्ञानानां पारमार्थिकरूपाभिप्रायेण।

न केवलं[177] प्रत्यक्षतः प्रवृत्तिः देशादिकाध्यक्षान्तरभेदरूपप्रमाणसमूहनिमित्ता, यावत् अनुमानतोऽपि तथैव, धूमाभासमात्रे अग्न्याभासमात्रे धूमस्याग्न्याभासाव्यभिचारित्वे पर्वताभासे च यानि प्रत्यक्षान्तराणि यच्च[178] तद्गृहीतातिरिक्ते अयोगव्यवच्छेदे 'अग्निरत्र' इत्येवं-भूते पृथक् अनुमानं प्रमाणम् तत्समूहादेव अर्थिनः तात्कालिकी प्रवृत्तिः,—इति संबन्धः ॥ ९ ॥

एवं विमर्शबलादेव भेदाभेदव्यवस्था, तदेव हि परमेश्वरस्य संवेदनात्मनः शिवनाथस्य स्वातन्त्र्यशक्तिविजृम्भितं[179]; ततश्च परैः यत् उच्यते 'दूरान्तिकादौ अर्थस्य अभेदः' इति

---

१७७ न केवलं प्रत्यक्षकृतायां प्रवृत्तावयं क्रमः यावदनुमानतोऽपि या प्रवृत्तिः तात्कालिकी सापि प्रमाणसमूहादेव, तद्यथा पर्वतग्राहि प्रत्यक्षम् अग्निग्राह्यनुमानं शीतापनोदग्राह्यनुमितानुमानं चौराद्युपद्रवविरहग्राह्याप्तवचनमित्यतः प्रमाणसमूहादेकान्तर्मुखस्वसंवेदननिष्ठिता प्रवृत्तिरिति ।

१७८ संवेदनेन दृढीकृत्यान्तर्मुखस्वरूपेणापि अनेकाभाताभासं विषयप्रवृत्तसंवेदनकलापानुप्राणकेन विमर्शेनापि प्रमाणानन्त्यं द्रढयति यच्चेति । अयोगेत्यत्र योग एव तात्पर्यम् ।

१७९ ऐश्वर्यमिति यावत् परैरिति सौगतैः, विमर्शबलादेव दूरान्तिकादावर्थस्याभेदो न स्वाभासमात्रबलादिति यावत् ।

तदपि उपपद्यते, न तु अन्यथा कथंचित्,–इति निरूप्यते

दूरान्तिकतयार्थानां
परोक्षाध्यक्षतात्मना ।
बाह्यान्तरतया दोषै-
र्व्यञ्जकस्यान्यथापि वा ॥१०॥
भिन्नावभासच्छायाना-
मपि मुख्यावभासतः ।
एकप्रत्यवमर्शाख्या-
देकत्वमनिवारितम् ॥ ११ ॥

प्रतिभासमात्रेण[१८०] व्यवस्थां कुर्वतः कथं दूरादूरयोर्वस्तुनोरभेदः,? प्रतिभासस्य सकलासकलावृतानावृतादितया[१८१] यथाकथंचिदपि भेदात् । ननु विमर्शोऽपि प्रत्याभासं तथैव भिन्नता,?[१८२] सत्यं; तथापि तु परो यो विमर्शः स

---

१८० परामर्शात्मकैकानुप्राणकेनान्तर्मुखबोधरहितेन ।

१८१ आदिशब्देन स्पष्टास्पष्टरक्तकृष्णसंमुखपराङ्मुखत्वादेः परिग्रहः ।

१८२ प्रत्याभासजीवितकल्पत्वात् विमर्शोऽपि भिन्न एवेत्यर्थः । अपित्विति य एव मया दूरादसकलो दृष्टः स एव निकटे सकलो दृश्यत इत्येकेन अत्राप्येकप्रमातृतैव निमित्तं सौगतस्य पुनरनुपपन्नमेतत् इति भावः ।

एवायं पदार्थ, — इति एकप्रत्यवमर्शरूपः, [१८३]तेन प्राणितकल्पेन आ समन्तात् ख्यानं प्रथनं यस्य [१८४]मुख्यावभासस्य एकरूपभावाभासस्य, एकप्रत्यवमर्शोऽ[१८५]तदुचितोऽपि हि अस्त्येवैका[१८६]वभासः, आभासविमर्शयोरन्योन्यमवियोगात्; तस्मात् मुख्यावभासादेकत्वमप्रति[१८७]हतमास्ते। यदेवानुमितं तदेव दृष्टम्, — इत्यत्र प्रत्यक्षपरोक्षतारूपेणात्मना स्वभावेन भिन्ना अवभासच्छाया अमुख्योऽवभासो येषां तेषाम् एकत्वं मुख्यावभासत एकप्रत्यवमर्शानुप्राणितात्, — इति संगतिः। [१८८]बाह्यान्तरतया भिन्नावभासानामैक्यं यथा — यदेव दृष्टं तदेवान्तरहमुल्लिखामि, — इति। [१८९]व्यञ्जकानां दीपालोकादीनां दोषैर्भिन्नाव-

---

१८३ तेनेति प्रमाणभूतेन।

१८४ पूर्वाभासापेक्षया मुख्यस्य तदेकविमर्शतादात्म्यावस्थितावभासस्य।

१८५ प्रतिभासानुचितोऽपि।

१८६ भिन्नावभासच्छायानामपि भावानाम्।

१८७ इति दूरान्तिकतयार्थानामिति व्याख्यातम्। अधुना परोक्षाध्यक्षात्मनेति व्याचष्टे यदेवेति।

१८८ बाह्यान्तरतयार्थानामिति व्याचष्टे बाह्येति।

१८९ दोषैर्व्यञ्जकस्यान्यथापि वेति व्याचष्टे।

भासानाम् ऐक्यं, यदेव रक्तोत्पलं दीपेन नीलं दृष्टं तदेव सूर्यांशुभिर्लोहितं पश्यामि,—इति। अन्येन[190] वापि प्रकारेण इन्द्रियापाटवादिना एकपार्श्वसंमुखत्वादिना वा येषामवभासच्छाया भिन्ना, तेषामपि मुख्यप्रत्यवमर्शानुवर्त्यवभासस्वरूपबलात् ऐक्यमेव,—इति स्थितम् ॥ १०—११ ॥

ननु दूरादूरादावस्तु स एवार्थः प्रमात्रध्यवसितार्थक्रियांशे तथैवोपयोगात्[191], बाह्यान्तरत्वादौ कथम् आन्तरस्यार्थक्रियायां प्रमात्रध्यवसितायामनुपयोगात्[192]?—इति भ्रान्तिं भङ्क्तुमाह

अर्थक्रियापि सहजा
नार्थानामीश्वरेच्छया।

१९० अन्यथेति व्याचष्टे।

१९१ अर्थक्रियैक्यादित्यर्थः।

१९२ नह्यान्तरस्यार्थक्रिया। अयं भावः—दूरेऽप्यर्थक्रिया या सैव प्रमात्रा दूरेप्यध्यवसीयते इति प्रमात्रध्यवसायादेकत्वमव्यभिचार्यस्तु तथैव परोक्षाध्यक्षादौ नैतद्बाह्यान्तरत्वे घटते प्रमात्रध्यवसिता हि अर्थक्रिया बाह्या आन्तरस्य पुनरर्थक्रियानुपपन्नेत्यान्तरस्यार्थक्रियायामनुपयोगात् कथमुक्तं बाह्यान्तरत्वे भेद इति।

नियता सा हि तेनास्या
नाक्रियातोऽन्यता भवेत् ॥ १२ ॥

इह 'कार्यकाषणतोरणता' (२।३।८) इत्यत्र स्वरूपमिवार्थक्रियापि[193] या मध्ये गणिता, सा सहजार्थस्वरूपभूता[194] न भवति; तत्कारित्वं हि यस्मात् ईश्वरेच्छया नियतं भवने चाभवने[195] च । यतो नैषा स्वरूपं, तेन तस्या[196] अकरणात् हेतोर्भावस्यान्यत्वं नाशङ्कनीयं, स्वरूपभेदात् हि संभाव्येतान्यत्वं, नच स्वरूपम् अर्थक्रियाकारित्वम्, — इत्युक्तं[197] वक्ष्यते च बहुशः । स्वरूपं च प्रत्यवमर्शबलादेकमेव बाह्यान्तरादावपि, — इति ॥ १२ ॥

ननु विमर्शबलादेव यदि वस्तूनां भेदाभेदव्यवस्था तर्हि इदानीं त्रिजगति निवृत्ता[198]

---

१९३ न तु स्वरूपभूता ।

१९४ अनन्यापेक्षा ।

१९५ भवन इति बाह्यत्वे । अभवन इत्यान्तरत्वे ।

१९६ आन्तरार्थक्रियायाः । अन्यत्वमिति अवस्तुत्वं वस्त्वन्तरत्वं वा ।

१९७ तत्तश्चेयानर्थः — बाह्यत्वे घटादीनां स्वलक्षणस्य यार्थक्रिया तेषामेवोल्लेखावसरे तथा विरहेऽपि ईश्वरेच्छानियत्यपेक्षणान्नान्यथात्वम् ।

१९८ सर्वथा गलिताः ।

भ्रान्तिसंकथाः, शुक्तिकायामपि सत्यरजततैव आपतति 'इदं रजतम्' इति विमृश्यमानत्वात्; ततश्च भ्रान्त्यभावे बाधानुपपत्तेः किमर्थमुक्तं 'मितिर्वस्तुन्यबाधिता' (२।३।२) इति । व्यभिचाराभावे हि 'अबाधिता' इत्यस्य विशेषणस्य [१९९]व्यवच्छेद्यं न लभ्यते, –इत्याशङ्कां निरस्यति

रजतैकविमर्शेऽपि
शुक्तौ न रजतस्थितिः ।
उपाधिदेशासंवादा-
द्[२००]द्विचन्द्रेऽपि नभोऽन्यथा ॥१३॥

'इदं रजतं स्थिरं सर्वप्रमातृसाधारणम् अर्थक्रियायोग्यम्' इति इदमंशे रजताद्यंशेषु तत्संमेलनांशे च आभासविमर्शनबलात्[२०१] न

---

१९९ परिहार्यम् । 'संभवे व्यभिचारे च स्याद्विशेषणमर्थवत्' इति न्यायात् ।

२०० 'दिक्संख्ये संज्ञायाम्' इत्यनेन संज्ञाभावात् समासाभावे द्विसंख्यश्चन्द्रो द्विचन्द्र इति शाकपार्थिवादित्वात् समास इत्यनवद्यम् इति टीकाकाराः । तदयुक्तं द्वौ चन्द्रौ द्विचन्द्र इत्येव साधु न च संज्ञाभावः द्विचन्द्र इति भ्रमसंज्ञायाः प्रसिद्धेः । अथवा मास्तु संज्ञा तथापीष्टसिद्धिः द्विचन्द्र इति द्विचन्द्राभासे इत्यर्थः ।

२०१ रजततया शुक्तिरजतैक्यस्य विमर्शनात् ।

तावत् किंचित् मिथ्यात्वं, किंतु उत्तरकालं यो भविष्यति विमर्शो 'नेदं रजतं वस्तु स्थिरं प्रमात्रन्तरगम्यमभिमतकार्यकारि' इति, तद्विमर्श[202]विमर्शनीयं यत् तत्पूर्वविमर्शकालसमुचितमेव रूपं तत् तस्मिन् पूर्वविमर्शकाले नैवामृश्यते[203], भाव्यं च तेनामर्शनीयेन। तत्रैव काले 'नेदं रजतं हि अभूत्' इति हि उत्तरः परामर्शो, नतु[204] उदितप्रत्यस्तमितायां शतहृदायामिव इदानीमेव 'इदं न' इति विमर्शः; ततो[205] यावता पूर्णेन रूपेण प्रख्यातव्यं विमर्शपर्यन्तं तावत् न प्रख्याति,—इत्यपूर्णख्याति[206]रूपा अख्यातिरेव भ्रान्तितत्त्वम्।

---

२०२ उत्तरविमर्शविमर्शनीयम्।

२०३ अयं भावः—न तावत्प्रतिभासमात्रेण रजतबुद्धौ विश्रान्तव्यं येन तद्रजतं सत्यमिति स्यात् अपितु विमर्शानुप्राणितेन प्रतिभासेन ततश्च विमर्शः पूर्वोत्तरकालावामृशत्येवेति न भिन्नविमर्शयोग इति तद्विमर्शविमर्शनीयमित्युक्तम्।

२०४ भवतु चात्र भाव्यं विमर्शनं तावन्मात्रं रजतस्थितिस्तत्रास्त्येवेति कथं बाधितत्वमित्यत आह नत्वित्यादि।

२०५ शतह्रदायां हि उत्तरकालमसंभवेऽपि तावन्मात्रमस्त्येव परामर्श इह न तथा तथा चाह तत इत्यादि।

२०६ विमर्शपर्यन्ताप्रख्यानात् अपूर्णख्यातिः।

तद्वशेन असद्विपरीतानिर्वाच्या[207]दिख्यातयोऽपि उच्यन्ताम् ।

ननु सत्यरुप्यज्ञानमपि अपूर्णख्यातिः । ततस्तर्हि किम्? । इदम् अतः सर्वं भ्रान्तिः,—इत्यागच्छेत् । दिष्ट्या दृष्टिरुन्मिमीलिषति आयुष्मतः, मायापदं हि सर्वं भ्रान्तिः; तत्रापि तु स्वप्ने स्वप्न इव गण्डे स्फोट इव अपरेयं भ्रान्तिरुच्यते, अनुवृत्त्युचितस्यापि विमर्शस्यास्थैर्यात् । [208]अतश्च पृथक् इदन्ताद्याभासेषु न काचन भ्रान्तिः, मेलनांशे तु विमर्शानुवृत्तिनिर्मूलनं विमर्शोदयकालादेव आरभ्य बाधकेन क्रियते, इति तत्रैव भ्रान्तिभावः,—इति सिद्धम् । रजतस्य शुक्तिकया सह यद्यपि एको विमर्शः, तथापि शुक्तौ रजतस्य तेन ज्ञानेन या दत्ता स्थितिः 'इदं रजतम्'[209] इति,

---

२०७ आदिशब्देनास्थिरख्याति—असाधारणख्याति—अनर्थक्रियाकारिख्यातीनां ग्रहणं बोध्यम् ।

२०८ यतो मायापदं सर्वं भ्रान्तिः ।

२०९ शुक्तिरजतयोरेकविमर्शत्वे विमर्शस्य स्थितेरभावात् अत्र भ्रान्तत्वम् । सर्वसाधारण्येन विक्रयादियोग्या न भवति तस्य विमर्शस्योन्मूल्यमानत्वात् ।

सा नः यत उपाधिरूपो यो देशः 'अत्र रजतम्' इति रजतच्छायाम् आत्मनोपरञ्जयन् शुक्तिदेशः, तस्यासंवादात् सम्यग्विमर्शनानुवृत्त्याभासनं संवादनं, 'वदिः' अत्र भासनविषयः, तस्याभावात् कारणात्[210] ।

नन्वेवं भवतु शुक्तिकारजते, द्विचन्द्रज्ञाने तु 'द्वौ चन्द्रौ' इत्याभासे शुक्तिकयेव मेलनं न केनचित्साकमाभासते, यत्र बाधः स्यात्; एकाभासांशे च न बाधः,—इत्युक्तं भवतैव । क एतदाह—मेलनं न केनचित्सह—इति । एवं हि सति स्वालक्षण्येन नियतदेशकालतया कथमाभासः? तद्देशकालाभ्यां सह तत्रापि अस्ति मेलनाभासो यद्विमर्शो[211]ऽनुविवृत्सुर्निरूप्यते, द्वित्वाभासचन्द्राभासयोरपि मेलनाभासे विमर्शानुवृत्तिव्यावर्तनं वाच्यम् । तदेतदाह—द्विरूपे चन्द्रेऽपि, न केवलं रजत एव । 'नभः' इति देशविशेषः कश्चित् ।

---

२१० उन्मूलनात्मकप्रतिपक्षभूतविमर्शस्थैर्यात् नेदंरूपं रजतमिति भावः ।

२११ मेलनाभासं विनानुविवृत्सितविमर्शाभावात् ।

'अन्यथा' इति द्विचन्द्रावरुद्धो योऽनवमृष्टः स न तथा,—इति बाधकेन उन्मूलितप्राच्यविमर्शानुवृत्तिकः क्रियते,—इति[२१२] । एवमाभासस्तन्मेलनं च नियमानुप्राणितम्,—इत्येतावदेव प्रमेयम्। एतान्येव आगमे तत्त्वानि वक्ष्यन्ते । वस्तु तत्त्वं प्रमेयम्—इति पर्यायः[२१३] । तथा च काठिन्याभास इति पृथिवी, लोहिताभास इति रूपं तेजश्च, मेलनाभासो रजः, संनिवेशस्तु नियतिरूपः, नियतिर्हि नियमः, स च अभावप्राणोऽभावस्फुरणमेव[२१४] च पृथिव्याभासस्य विचित्रतया चकासत् पृथुबुध्नोदराकारता, भेदाभासश्च माया, तत्पृष्ठे सत्यप्रकाशाभासश्च शिवतत्त्वम्,—इत्यास्तां तावत् । अग्रे भविष्यति एतत् । सर्वथा तावदत्र प्रमेये भगवत एव भेदने च अभेदने च

---

२१२ यथा च मानसे भ्रमे तथैन्द्रियकर्संमतेपि भ्रमे द्विचन्द्रे न स्थितिः यतश्चन्द्राक्रान्तो यो नभोदेशो विमृष्टः तत्रान्यथाभूतं विमर्शान्तरमुन्मूलकमुदेति नास्मिन् नभोदेशे द्वितीयश्चन्द्र इति ।

२१३ एकार्थो भिन्नश्रुतिः शब्दः पर्यायः ।

२१४ स्वप्रतिपक्षभावस्याभावः ।

स्वातन्त्र्यं, घटगताभासभेदाभेददृष्टिरेव[215] च परमार्थाद्वयदृष्टिप्रवेशे उपायः समवलम्बनीयः, न तु व्यवहारोऽपि अयं परमेश्वरस्वरूपानुप्रवेशविरोधी,—इति प्रतिपादितम् ॥ १३ ॥

एतदेव स्फुटयन् सकलप्रमेयसिद्धिः परमेश्वर एव आयत्ता,—इति निरूपयति

गुणैः शब्दादिभिर्भेदो
जात्यादिभिरभिन्नता।
भावानामित्थमेकत्र
प्रमातर्युपपद्यते ॥ १४ ॥

इह अनुवृत्तं[216] व्यावृत्तं च चकासद्वस्तु कतरेण वपुषा न सत्यमुच्यताम् उभयत्रापि[217] बाधकाभावात्, सत्यतो हि यदि बाधक एव एक-

२१५ यतोऽत्र सर्वपृष्ठपाति शिवतत्त्वं ततो भगवत एव भेदनेऽभेदने च स्वातन्त्र्यम्। ततश्चेदं सिद्धं भवतीत्याह घटेत्यादि। तेन संसारिप्रमातुः परमार्थप्रमात्रपेक्षया यदद्वयं न प्रकाशते ततो विकल्पव्यापारः तद्वैपरीत्ये तु परमार्थतैवेत्याह घटगतेत्यादि। विकल्पोऽप्ययं पारमेश्वर्यप्रवेशेऽवक्रो मार्गः। यदुक्तमनेनैवान्यत्र। जलात् स्फूर्जज्ज्वाला—इत्यादि।

२१६ अनुवृत्तं सामान्यं, व्यावृत्तं विशेषः। कतरेति सामान्येन विशेषेण वा।

२१७ उभयत्रेति व्यावृत्तानुवृत्तयोः।

तरस्य स्यात् तत्तदुदये[२१८] स एव भागः पुनरुन्मज्जनसहिष्णुतारहितो विद्युद्विलायं विलीयेत; न चैवम् अत एव भेदाभेदयोर्विरोधं दुःसमर्थमभिमन्यमानैरेकैरविद्यात्वेन[२१९] अनिर्वाच्यत्वम्, अपरैश्च[२२०] आभासलग्नतया सांवृतत्वम् अभिदधद्भिः आत्मा परश्च वञ्चितः । संवेदनविश्रान्तं[२२१] तु द्वयमपि भाति संवेदनस्य स्वातन्त्र्यात् । सर्वस्य तिरश्चोऽपि एतत् स्वसंवेदनसिद्धं—यत् संविदन्तर्विश्रान्तमेकतामापाद्यमानं जलज्वलनमपि अविरुद्धं, तत एव उक्तं

'अत एव यथाभीष्टसमुल्लेखा………… ।' (१।६।११)

---

२१८ एकतरोदये ।

२१९ वेदान्तावलम्बिभिः ।

२२० अपरैरिति तर्कावलम्बिभिः । सांवृतत्वमिति नकिंचिद्रूपत्वम् ।

२२१ अस्मन्मते तु उभयं कल्पते इत्याह संवेदनेति । भेदिते चाभेदनमभेदिते च भेदनं स्वातन्त्र्यम् । अत्रायमर्थः—एकस्मिन्नेवाभासक्षणे शब्दादिभेदेन प्रत्याभासविश्रान्तेन रूपेण शब्दादिसामान्याभासेन स्वालक्षण्येन चार्थोऽवभाति तत्रोच्यताम् एकप्रमातृविश्रान्तिं विना कथं तदुपपद्यते। यदि विशेषाभासेन सामान्याभासो न जायते इत्युच्यते तर्हि अत्र स्वप्रतीत्यपह्नवः सामान्याभासे वा विशेषाभासो न जायते इति तत्राप्येवम् । तदत्रोभयत्रापि बाधकसंभवः सत्यतो न भवति, अथ प्रतीतिद्वयविरोधाद्बाधककल्पना तदेकोदयेऽन्य उन्मज्जनारहितो विलीयते इति निश्चयाशक्ततया स्वानुभवनिह्नवः क्रियते इत्यलं स्वप्रतीत्यपह्नवशालिभिर्वादेन ॥

इति। अतश्च गुणैरुपाधिरूपैर्विशेषाधायितया विवक्षितैः शब्दादिभिर्वा दण्डादिभिरपि वा यो भेदो जातिवशात् सादृश्यात् भेदाग्रहणाद्वा; यश्च अभेदो भावानाम् इत्थमित्युक्तनीत्या 'क्रियासंबन्ध' (२।२।१) इत्यतः प्रभृति निरूपितः, स एकत्र[222] प्रमातरि सकलप्रमाप्रमाणसंयोजनवियोजनादिविचित्रासंख्यकृत्यप्रपञ्चोचितस्वातन्त्र्ये भगवत्यस्मदीयहृदयैकान्तशायिनि शिवशब्दव्यपदेश्ये सति उपपद्यते, नान्यथा। विशेषणान्येव[223] च भेदकानि,— इति किमन्त्यैरन्यैर्विशेषैः; अयं च पर-

२२२ एकप्रमातरीति। ननु देशकालभेदादेव स्वालक्षण्यं भेदः तत्र किं प्रमात्रा क्रियते न किंचित् क्रियते, सत्यमेवैतत् परंत्वियद्वक्तव्यं स देशकालभेदोऽपि कुतस्त्य इति अवभासभेदादिति चेत् किमित्यस्थानस्थाने कुप्यसि अवभासभेदोऽपि प्रमात्रधीन एव। ननु च तथापि भवतां स्वमतहानिः प्रसजेत् अवभासभेद एव भेदकः संपन्नः शब्दादयो भेदका इति भवन्मतं नैवम्, अवभासभेदो हि अवभासमानावभास्यमानरूपेषु वेद्येषु च शब्दादिष्वेव भाति। ननु चैवं सति शब्दादेर्भेदकत्वेन गुणत्वे जातिर्नाम कान्या। अत्रोच्यते नान्यापितु त एव शब्दाद्याभासा देशकालाभासानालिङ्गितात्मानो जातिरिति चोक्तं सादृश्यात् भेदाग्रहणाद्वा यच्चाभेदोभावानामिति।

२२३ विशेषणान्येवेति। अत्राहुः काणादाः विशेषपदार्थसिद्धये यथास्मदादीनां गवादिषु अश्वादिभ्यस्तुल्याकृतिगुणक्रियोपचयावयवसंयोगप्र-

माणुर्य एतद्देशादिविशिष्टघटारम्भणकाले पश्चात्तनसंघटितद्व्यणुकारम्भकाले पूर्वं मिलितः; अयं स आत्मा, यः पुरा स्वर्गसदने सुरयोषितमिमामित्थं परिरब्धवान्,—इति इयतैव योगिसर्वज्ञादीनां सिद्धः परमाण्वात्मादिषु भेदावभासः,—इत्यलमवान्तरेण[२२४] । सिद्धं

---

त्ययव्यावृत्तिर्दृष्टा यथा गौः शुक्लः शीघ्रा गतिः पीनः ककुद्मान् महाघट इति तथास्मद्विशिष्टानां योगिनां नित्योर्ध्वानां तुल्याकृतिगुणक्रियेषु परमाणुषु मुक्तात्ममनःसु च अन्यनिमित्तासंभवात् येभ्यो निमित्तेभ्यः प्रत्याधारविलक्षणोऽयमिति प्रत्ययव्यावृत्तिः देशकालविप्रकृष्टे च स एवायं परमाणुरिति प्रत्ययव्यावृत्तिः प्रत्यभिज्ञानं च यतो भवति तेऽन्त्या विशेषा इति। न च निर्निमित्तः प्रत्ययो भवति ते च स्वाश्रयविशेषकत्वात् विशेषा एव विनाशारम्भरहितेषु नित्यद्रव्येषु अण्वाकाशकालदिगात्ममनःसु प्रतिद्रव्यमेकैकशो वर्तमाना अन्त्या अत्यन्तव्यावृत्तिबुद्धिहेतवो विशेषा इति उक्तं च सूत्रकृता नित्यद्रव्यवर्तिनोऽन्त्या विशेषा इति । तदुक्तं श्रीधरेणापि

नित्यद्रव्येषु सर्वेषु परस्परसधर्मसु ।
प्रत्येकमनुवर्तन्ते विशेषा भेदहेतवः ॥

इति । यद्वा शब्दादीनामेव विशेषणभावेनावस्थितत्वात् अन्तेषु नित्यद्रव्येषु भवा अन्त्याः अनन्ता विशेषा नित्यद्रव्यवृत्तयोऽन्त्याः परमाण्वाकाशकालदिगात्ममनांसि नित्यद्रव्याणि तेषु वृत्तिर्येषां ते तथा परमाणवोऽन्ताः जगद्विनाशारम्भे कोटिभूतत्वात् मुक्ता आत्मानो मुक्तानि च मनांसि अन्तानि संसारपर्यन्तवर्तित्वात् तेषु भवा इति राजानलक्ष्मकः ।

२२४ प्रकृतानुपयोगिना ।

तावत् भेदाभेदरूपं प्रमेयतत्त्वम् एकप्रमातृविश्रान्त्या निःशङ्कतां श्रयति, — इति ॥ १४ ॥

ननु एवं-भूतो यद्ययं[225] प्रमाता तत्रैव तर्हि प्रमाणोपन्यासे प्रयतनीयं[226] न प्रमेये, यदाह 'प्रधाने हि यत्नः फलवान्' इति। तदेतदाशङ्क्य प्रथमोपक्षिप्तमेव प्रमेयं स्मारयत्याचार्यः । तथा हि

'अजडात्मा निषेधं वा सिद्धिं वा विदधीत कः ।' (१।१।२)

इति यद्वस्तु तदेवेदानीं ज्ञाते प्रमाणस्वरूपे परमेश्वरस्वरूपे च निर्वाहणार्हम्, एवं-भूतं हि प्रमाणं तदेवं-भूते हि भगवति कथं क्रमताम्, — इति । तदेतत् स्फुटयितुमाह

विश्ववैचित्र्यचित्रस्य
समभित्तितलोपमे ।
विरुद्धाभावसंस्पर्शे
परमार्थसतीश्वरे ॥ १५ ॥

---

२२५ भेदाभेदरूपसमस्तप्रमेयनिःशङ्कविश्रमस्थानम् ।

२२६ तस्य तदधीनसत्ताकत्वात् । यदाहेति व्याकरणभाष्यकारः शेष-

प्रमातरि पुराणे तु
सर्वदा भातविग्रहे ।
किं प्रमाणं नवाभासः
सर्वप्रमितिभागिनि ॥ १६ ॥

परिमितप्रमातृलग्नो नवनवाभासः प्रमेयोन्मुखः प्रमाणम् ,– इत्युक्तं । तत्र प्रकाशवपुषि प्रकाशमात्रस्वभावे पूर्वसिद्धे कः प्रमाणस्योपयोगः संभावना वा । तथा च पूर्वसिद्धे प्रमातरि सति तल्लग्नप्रकाशान्तर्भूतविमर्शमयीम्[227] अभूतपूर्वां प्रमेयस्य सिद्धिं वितरति प्रमाणम् । प्रमातुश्चादिसिद्धस्य किंलग्ना सिद्धिरस्तु । विश्ववैचित्र्यं[228] हि तत्र परमेश्वरे प्रकाशैकात्मनि सति भाति यथा चित्रं भित्तौ । यदि[229]

२२७ आदिसिद्धे प्रमातरि सति हि यत् तस्य देहादिसंकोचावभासिरूपं तल्लग्न इति ।

२२८ ननु यथा संकोचसारमायाप्रमात्रपेक्षया तत्प्रकाशान्तर्भूतविमर्शरूपा प्रमेयसिद्धिः प्रमाणेन क्रियते तथा परप्रमात्रपेक्षयापि किं प्रमेयसिद्धौ प्रमाणापेक्षा उत नेत्यतो नेत्याह विश्वेत्यादि ।

२२९ विश्ववैचित्र्यचित्रे दृष्टान्तदार्ष्टान्तिके अपि अत्र [illegible]प-प्रतिपत्त्यर्थं सममेव संयुनक्ति यदि हीत्यादिना । पृथ[illegible]ल-प्रकाशावन्तरेण ।

हि नीलपीतादिकं पृथगेव परामृश्यते तदा स्वात्मविश्रान्तेषु तेषु तथा वा अन्योन्यविषये जडान्धबधिरकल्पानि ज्ञानानि स्वविषयमात्र-निष्ठितानि, विकल्पाश्च तदनुसारेण भवन्तः तथैव,—इति 'चित्रम् इदम्' इति कथंकारं प्रति-पत्तिः । एकत्र तु निम्नोन्नतादिरहिते भित्ति-[230]तले रेखाविभक्त[231]निम्नोन्नतादिविभागजुषि 'ग-म्भीरनाभिरुन्नतस्तनीयम्' इति चित्रावभासो युक्तः, तद्वत् एकप्रकाशभित्तिलग्नत्वेन वैचि-त्र्यात्मकभेदोपपत्तिः, इति भावभेदग्रहणप्रका-शभित्तेरनपायिनीं स्वप्रकाशतामाह । तत्र स्वप्रकाशे किं प्रमाणेन[232]? । अथोच्यते पूर्वम-[233]स्य प्रकाशो न भवति, तर्हि स एव नास्ति,—इति स्यात् प्रकाशमात्ररूपत्वात् तस्य । नच

२३० तस्मात् भित्तिप्रकाशमन्तरेण सिन्दूरहरितालादिप्रकाशचित्रप्र-काशासंभव इत्यर्थः ।

[redacted]त्युपकल्पितः ।

[redacted]भासात्मना ।

[redacted]प्रमातुः सति हि प्रमाणे स भवति । स इति स्वप्र-का[redacted]

अस्य नास्ति,—इत्यभावेन स्पर्श उपपन्नो,[२३४] यतो हि असावेव परमार्थतः सन् प्रकाशस्यैव सत्त्वात्, सतश्च असद्रूपत्वायोगात्। अथ उच्यते—ईश्वरता तस्याप्रमिता प्रमास्यते[२३५] तदपि न, यतो हि असौ प्रमातृत्वेन चेत् नाचकास्यत् कस्यायमुद्यमः, चकास्ति चेत् तर्हि प्रमातृतैव ईश्वरता, तदाह 'ईश्वरे प्रमातरि सर्वदा भातविग्रहे' इति। विशेषेण गृह्यते इति विग्रहोऽसाधारणं स्वरूपम्, अत एव स्वतन्त्रप्रकाशरूपत्वात् अभावस्पर्शायोग्येऽभावानुप्रवेशनेन यः कालव्यवहारः[२३६] सोऽत्र नास्ति,—इति 'पुराणे' इत्युक्तम्। तत्र किं प्रमाणं, कुतः प्रयोजनात्प्रमाणं, कस्तत्र[२३७] प्रमाणस्योपयोगः,—इति, तत्र च किं प्रमाणं न किञ्चित्

---

२३४ अन्यत् हि यत्किंचित् सर्वं तत् तत्स्वातन्त्र्यं तदस्य भवनस्वभावस्याभवनेन कथं संस्पर्शो भवति विरोधात्, तदेतदुक्तं विरुद्धाभावसंस्पर्शे इति।

२३५ प्रमाणेन प्रकाश्यते।

२३६ अभूदस्ति भविष्यतीति वर्तमाने भूतत्वासंभवः भविष्यत्कालं तदभावः भूतत्वे द्वयोरभाव इति चाभावानुसंधानेन कालव्यवहारः।

२३७ किंशब्दस्य सर्वनामत्वादनेकार्थयोग इति दर्शयति तत्रेत्यादि।

उपपत्त्या घटते[२३८] इत्यर्थः । यतः प्रमाणं नामाभिनवाभासरूपं प्रमातरि प्रमितिलक्षणां विश्रान्तिं विदधत् प्रमाणं भवति, प्रमाता चाविच्छिन्नाभासः सर्वाश्च प्रमितीः स्वात्मनि अन्तर्मुखरूपे भजते । तत् तस्मिन् कथमभिनव आभासस्तत्प्रमितिश्च कुत्र विश्राम्यतु । तस्मात् देहप्राणपुर्यष्टकशून्यप्राय एव प्रमातरि प्रमाणमुच्यताम् । तत्रापि[२३९] च वेद्यांशे यदि नाम, नतु कथंचित् संविदंशे, तत्रापि विषयोन्मुखे तत एव संकुचितत्वात् अभिनवाभासे संकोचविहीनसत्यप्रमातृलग्नतापेक्षया कथ्यतां स्वसंवेदनं प्रमाणम् । सौगतेनापि 'ममेदं ज्ञानम्' इति कल्पितप्रमातृलग्नमेव तदुपेत्यं, नतु परमार्थप्रमातरि प्रमाणेन किंचित् । उक्तं च मयैव

'यत्प्रमेयीकृतोऽसीति सर्वोऽप्यात्मनि लज्जते ।
कथं प्रमेयीकरणं सहतां तन्महेश्वरः ॥'

इति ॥ १६ ॥

---

२३८ न च वाच्यं प्रत्यक्षादिव्यतिरिक्तं किंचिद्भविष्यतीति ।

२३९ तत्रेति संकुचितेपि ।

नन्वेवं यदि भगवति प्रमाणमनुपयोग्यनुपपत्ति च किमर्थं तद्विषयं शास्त्रं, तद्धि[२४०] प्रमाणमेव, परार्थानुमानात्मकं हि शास्त्रम्, तत्र च प्रमाणादिषोडश[२४१]पदार्थतत्त्वमयत्वमेव परमार्थः। यत्तु सौगतैः पञ्चावयवत्वादि दूष्यते[२४२]

---

२४० तथापि किमित्यत आह तदिति ।

२४१ ते च षोडश पदार्थाः प्रमाणप्रमेयसंशयप्रयोजनदृष्टान्तसिद्धान्तावयवतर्कनिर्णयवादजल्पवितण्डाहेत्वाभासच्छलजातिनिग्रहस्थानाख्याः । तत्रैषां लक्षणानि । १ अर्थपरिच्छित्तिसाधनानि प्रत्यक्षादीनि प्रमाणानि । २ तत्परिच्छेद्यमात्मादि प्रमेयम् । ३ नानार्थावमर्शः संशयः । ४ हिताहितप्राप्तिपरिहारौ तत्साधनं च प्रयोजनम् । ५ हेतोः प्रतिबन्धावधारणं दृष्टान्तः ।६ प्रमाणतोऽभ्युपगम्यमानः सामान्यविशेषवानर्थः सिद्धान्तः । ७ परार्थानुमानवाक्यैकदेशभूताः प्रतिज्ञादयोऽवयवाः । ८ संदिग्धेर्थेऽन्यतरपक्षानुकूलकारणदर्शनात् संभावनाप्रत्ययस्तर्कः । ९ साधनोपलम्भजन्मा तत्त्वाववोधो निर्णयः । १० वीतरागकथावस्तुनिर्णयफलो वादः । ११ विजिगीषुकथा पुरुषशक्तिपरीक्षणफला जल्पः । १२ स्वपक्षस्थापनाहीनस्तद्विशेषो वितण्डा । १३ अहेतवो हेतुवदाभासमाना हेत्वाभासाः । १४ अर्थविकल्पैर्वचनविघातश्छलम् । १५ हेतुप्रतिबिम्बनप्रायं प्रत्यवस्थानं जातिः । १६ सत्यवस्त्वप्रतिभासो विपरीतप्रतिभासश्च निग्रहस्थानम् इति ।

२४२ सौगतमते हि सर्वस्य क्षणिकत्वादवयवानां परस्परापेक्षित्वात् तन्मतेऽयुक्तत्वम् तथा चाहुः । तत्स्वकण्ठेन वक्तव्यं यत्साक्षान्नोच्यते स्वयं विवादादेव च प्रतिज्ञार्थो लभ्यते इति किं तेनोक्तेन [redacted] अत्राहुः स्वप्रतिपत्तिमनुसरता परस्य प्रतिपत्तिरनुसरणीये[redacted] प्रथममुपलब्धायां धर्मी तावदाख्येय एव, अनुच्यमाने हि [redacted] धिकरणो हेतुः क साध्यं साधयेत् धर्म्यनवच्छिन्ने च धर्मा[redacted] र्थकमिति तदुक्तम् ।

तदाग्रहमात्रं, षोडशसु हि पदार्थेषु निरूप्यमाणेषु सम्यक् प्रतिपाद्यं परः प्रतिपद्यते, 'हिताहितप्राप्तिपरिहारयोः' इत्यादिना च ग्रन्थेन । परस्य किं प्रयोजनं, तद्धि परस्य प्रतिपत्त्यै, सा च परार्थानुमानात्, तत्र च प्रतिज्ञादेरुपयोगः,—इति, तत् परिपूर्णपरप्रतिपत्तिकारि परमार्थतः सकलमेव शास्त्रं परार्थानुमानम् आगमे[243]व्यतिरिक्तं न्यायनिर्माणवेधसाक्षपादेन निरूपितम्,—इति । अ[244]त्रापि पूर्वोक्तमेव

---

परो मद्वचनादेव तमर्थं बुध्यतामिति ।
वक्ता स्वप्रत्ययेनेदं नहि वाक्यं प्रयुज्यते ॥
किंत्वेनमनुमानेन बोधयामीति मन्यते ।
सोऽपि तद्वचनान्नैव तमर्थमव बुध्यते ॥
किन्तु व्याप्तिमतो लिङ्गात् स्वयं तत्तु न पश्यति ।
तत्प्रतीत्यभ्युपायत्वात् परार्थमिदमुच्यते ॥

इति । तस्मात् प्रतिज्ञादयः पञ्चावयवा अपरिहार्या इति सिद्धम् तदेतत्समर्थयति हिताहितेत्यादिना । 'यमर्थमुद्दिश्य पुरुषः प्रवर्तते तत्प्रयोजनम्' इति तच्च स्वार्थमेव न किं तु परार्थमपीत्युक्तं, परस्य किं प्रयोजनमिति पर आक्षिपति । तदर्थं तद्धि परस्य प्रतिपत्त्यै इत्यादि । तथापि [redacted] आह, सा चेत्यादि । तत्र चेति । इदमुक्तं भवति प्रयोजनेन [redacted] तया प्रवृत्तिः तत्र च परार्थानुमानं तथा च प्रतिज्ञादि इति [redacted]र्थेषु प्रतिपद्यमानेषु हेयोपादेयतासिद्धिः परार्थानुमानादिति [redacted]मानं शास्त्रमिति ।

[redacted] परमेश्वरस्वातन्त्र्यात्मकपरामर्शसारत्वात् आगमस्य ।

[redacted] तथापि आगमेनात्र किमीयो व्यापारः साध्यते इत्यत आह [redacted] ।

'किंतु मोहवशात्'(१।१।३) इति स्मारयितुमाह

अप्रवर्तितपूर्वोऽत्र
केवलं मूढतावशात् ।
शक्तिप्रकाशेनेशादि-
व्यवहारः प्रवर्त्यते ॥ १७ ॥

इह परमेश्वरस्येदमेव परं स्वातन्त्र्यं—यत् अस्मादृशे ग्राच्यपशुदशाविशेषासंभाव्यमानातिदुष्करवस्तुसंपादनं नाम । इतश्च किम् अतिदुष्करं भविष्यति,—यत्प्रकाशात्मनि अखण्डिततादूप्ये एव प्रकाशमाने प्रकाशननिषेधावभासः प्रकाशमानः । तस्मात् परमेश्वरस्येदं तत्परं स्वातन्त्र्यं यत् तथावभासनं पशुरूपतावभासनं नाम ग्राहकांशसमुत्थापनं, तद्द्वारेण च ग्राह्योल्लासनमपि । सैषा भगवतो मायाशक्तिरुच्यते । यथोक्तम्

'माया विमोहिनी नाम………………… ।'

इति । तदेवं-भूतान्मायाशक्तिरूपात् स्वातन्त्र्यात् या मूढता विनष्टपूर्णचेतनता स्वात्मवर्तिन इच्छास्पन्दोदयस्फुटस्फुरितविश्वभाव-

निर्भरितात्मनः पूर्णत्वस्य, स्मृत्यादिशक्त्यात्मनः स्वातन्त्र्यस्य, देशकालसंकोचवैकल्यात् अयत्नसिद्धवैभवनित्यताधर्मस्य च प्रकाशमानस्यापि यदप्रकाशमानतया अभिमननं, तस्या[२४५] वशात् सामर्थ्यात् पूर्वं यो न प्रवर्तितः समनन्तरश्लोकद्वयोक्तस्वरूपे प्रमातरि भगवति ईश्वरत्वादिना उक्तेनैव पूर्णत्वादिना व्यवहारो यः खलु 'अहम्' इति भाति स पूर्णः विभुः स्वतन्त्रो नित्यः,—इत्येवमादिरूपः, तं प्रवर्तयन्तु व्यवहारं लोका इति । एतेन शक्तीनाम् इच्छाज्ञानक्रियाणां प्रकाशकेन प्रत्यभिज्ञारूपेण व्यवहारसाधनपरार्थानुमानात्मना शास्त्रेण तं व्यवहारं प्रवर्तयतां[२४६] तत्समर्थाचरणं क्रियते । 'प्रवर्त्यते' इति द्वौ णिचौ । केवलमिति न तु किंचिदपूर्वं क्रियते, नापि तत्त्वतोऽप्रकाशमानं प्रकाश्यते, प्रकाशमान एव यत् 'न प्रकाशते' इत्यभिमननं तदपसार्यते । तदपसरणमेव हि परमेश्वरतालाभो

२४५ तस्या इति मूढतायाः ।

२४६ जन्तूनामित्यर्थः ।

मुक्तिः, तदनपसरणमेव संसारः, अभिमननमात्रसारं हि एतद्द्वयम्[२४७], उभयमपि चेदं भगवद्विजृम्भितमेव । एतदुक्तं भवति—यथा भौतस्ये[२४८] भासमाने एवात्मनि 'अपहारितोऽहम्' इति मोहान्मन्यमानस्य मोहोऽपसार्यते,—कः खलु त्वं?, यस्येदृशं वस्त्रं मुखमीदृशम्,—इति चेत्, पश्य तदस्ति भवतः—इति पुनः पुनरभिदधता न च अस्य अपूर्वं किंचन रचितं, तथा पशुलोकस्य भासमान एव आत्मनि 'नाहमीश्वरः' इत्यादि मोहादभिमन्वतो मोहोऽपोह्यते । यो हि ज्ञानक्रियास्वातन्त्र्ययुक्तः स ईश्वरो यथा सिद्धान्तपुराणादिषु प्रसिद्धः, तथा च त्वम्—इति । यदि वा यस्मिन् यदायत्तं स तत्रेश्वरो राजेव स्वमण्डले, तथा च त्वयि विश्वम्,—इति ईश्वरताव्यवहारो नान्यनिमित्तकः,—इति व्याप्तिः । यत् खलु यल्लग्नं भाति तत्तेन पूर्णं निधानमिव मणिभिः,त्वल्लग्नं च विश्वम्,—इति।

२४७ एतदिति मुक्तिसंसाररूपम् ।

२४८ भूताविष्टस्य भूतग्रस्तस्य वा ।

यस्य यदन्तर्वर्ति भाति, स तावति व्यापकः समुद्र इव मणिषु, त्वयि च संविद्रूपे धरादिसदाशिवान्तं शास्त्रप्रक्रियोक्तं विश्वम्,–इति । यस्मिन् स्थिते यदुदेति लीयते च तत् तत्पूर्वापरभागव्यापि यथा भूमावङ्कुरः, तथा च त्वयि प्रकाशरूपे विश्वम्,–इति। एवम् अन्येऽपि धर्माः सहस्रशोऽपि आगमादिसिद्धा योज्याः । तदेवं[२४९] व्यपोहिते व्यामोहे, स्थितेऽपि तत्संस्कारमात्रविधृते शरीरादौ अनात्मताभिमानपुरःसर एवात्मताभिमाने, घटादौ च प्रकाशमान एवानात्मताभिमाने ज्ञातेन्द्र[२५०]जालतत्त्वस्य पश्यतोऽपि इन्द्रजालं यथा न तत्त्वतो व्यामोहः तथा प्रत्यभिज्ञातात्मस्वरूपस्य, ततो निवृत्ते प्रयाणप्रापितपर्यन्ते देहे परमेश्वरतैव । अभ्याসभावनाबलेन तु शिवशासनोपदिष्टेन देहघटादावेव परमेश्वरतासमावेशमभिनिविश्य

---

२४९ तदेवमत्र सिद्धमित्याह तदेवमिति ।

२५० व्यवहारसाधनप्रमाणप्रभावसमाश्वस्तहृदयो मोहसंकरकलया परमेश्वरेणैव परोजिहीर्षादिकृत्यनिर्वाहणाय कंचित्कालं प्रयत्नसंधार्यमाणे देहादावहंताभिमाने प्रबुद्ध इत्यभिधीयते तदाह ज्ञातेन्द्रजालेत्यादि ।

पश्यत इहैव शरीरे पारमेश्वर्यांशधर्मोद्गमः[२५१], न तु वस्तुतः पूर्णता, देहत्वस्यैव संकोचप्राणस्य गलने यथास्थितविश्वात्मकतापत्तेः। यस्य तु व्यवहारसाधने हेतुकलापेऽपि असिद्धताभिमानः, तस्य तत्रापि व्यवहारसाधनैरेव व्यामोहोऽपसार्यः। यस्य तु सर्वथा नापसरति, तत्रेश्वरशक्तिबलान्मूढतैव, तस्यापि कर्णपथगमनात् संस्कारपाकेनावश्यं कदाचिद्भविष्यत्येव[२५२] स्वरूपलाभः। तदेवं 'कर्तरि' (१।१।२) इत्यादिश्लोकद्वयेन यदुक्तं तदेव 'विश्ववैचित्र्य' इत्यादिश्लोकत्रयेणोपस्कृत्य[२५३] पुनर्निरूपितम्, एवं-भूतं तावत् प्रमाणं तदेवं-भूते भगवति

२५१ अणिमादिः।

२५२ यथोक्तम्

'निष्कम्प आत्मसंवित्तौ जीवन्मुक्तोऽभिधीयते।
तत्त्वे विकल्पमानस्तु पिण्डपाताच्छिवं व्रजेत्॥'

अनेनैवाचार्येणान्यत्र

'संसारजीर्णतरुमूलकलापकर्म-
संकल्पसान्तरतया परमार्थवह्नेः।
स्युर्विस्फुलिङ्गकणिका अपि चेत्तदन्त-
र्देदीप्यते विमलबोधहुताशराशिः॥'

इति।

२५३ संस्कृत्येत्यर्थः।

कथमुपपद्यताम् । ततश्च युक्तमुक्तं शास्त्रादा[254]विति भङ्ग्यन्तरेण इदानीं तदेव निर्वाहितम्,—इति शिवम् ॥ १७ ॥ आदितः ॥ १२० ॥

इति श्रीमदभिनवगुप्ताचार्यविरचितायां प्रत्यभिज्ञासूत्रविमर्शिन्यां क्रियाधिकारे मानतत्फल-मेयनिरूपणं नाम तृतीयमाह्निकम् ॥ ३ ॥

---

२५४ कर्तरीत्यादौ ।

## क्रियाधिकारे

## चतुर्थमाह्निकम्

भावानाभासयन् कर्ता निर्मले स्वात्मदर्पणे ।
कार्यकारणभावं च यश्चित्रं तं स्तुमः शिवम् ॥

क्रियाशक्तिस्फारप्रायसंबन्धाभिधाने[2]प्रसङ्गात् ज्ञाप्यज्ञापकभावस्य तत्त्वं प्रसाध्य, कार्य-

---

१ तदेवं द्विविधं व्यवहरणं ज्ञाप्यज्ञापककार्यकारणाभ्यां, तत्र ज्ञाप्यज्ञापकभावाख्यं व्यवहरणं परमप्रमातरि परमेश्वरेऽनुपपत्त्या साक्षादनुपयोगेपि मोहापसारणमात्रफलकमित्यवस्थापितम्। अधुना कार्यकारणभावाख्यद्वितीयव्यवहरणोपायस्य तत्त्वं दर्शयति। तत्राह्निकार्थं तावदाक्षिपत्याचार्यः भावानित्यादिना । तत्र द्विविधं तावत् कार्यकारणभावं द्योतयन्नाह पूर्वोत्तरार्धाभ्याम् । तत्राद्यो यदेवंविधेन शिवादिधरापर्यन्तेन वपुषा तत्स्वरूपानतिरिक्तवृत्तित्वात् तस्यैव महासामान्यतत्त्वस्य तथा तथा प्रथनं विशेषाभासेपि सामान्यानुगमात्, नहि निर्निमित्तमेव विशेषोदय इत्याह कर्त्ता भावानाभासयन्निति । तत्रैवानतिरिक्ततायां हेतुमाह स्वात्मदर्पण इति। तदित्थं कर्तैव स्वं स्वरूपं भेदयन् कर्मभावमापद्यते इत्युक्तं भवति । द्वितीयोपि कार्यकारणभावः तस्मिन् परमार्थे सति तन्नियत्यवस्थापितोऽन्योन्यविशेषाधायकः संभवतीत्याह कार्यकारणभावं चेत्यादि। तन्नियत्यवस्थापितत्वात् चित्रमित्युक्तम् । आभासयन्निति स्वात्मन्युट्टङ्कयन् । निर्मल इति शुद्धसंविद्प्रकाशात्मकत्वात् । कार्यकारणेति कल्पितं । चित्रमिति नियतिरूपत्वात्। स्तुम इति तादृगाभासनिभालनपराः तत्रैव समाविशाम इति ।

२ द्विविधो हि संबन्धः ज्ञाप्यज्ञापककार्यकारणभावत्वाभ्यां, तत्र ज्ञाप्यज्ञापकात्मा संबन्धो निर्णीतोऽपरस्तु निर्णीयते इति ।

कारणभावस्य तत्त्वं प्रसाधयितुं श्लोकैकविंशत्या आह्निकान्तरमारभ्यते,–'एष च' इत्यादि 'एवमिच्छैव हेतुता कर्तृता क्रिया' इत्यन्तम् । तत्र श्लोकेन स्वमते कर्तृकर्मभाव एव कार्यकारणभावः,–इत्युपक्षिप्यते । ततः श्लोकत्रयेण जडस्य कारणत्वं पराक्रियते । ततः श्लोकषट्केन चेतनस्यैव कर्तृतारूपा कारणता प्रसाध्यते । ततः[३] प्रसङ्गादनुमाने नियतिशक्तिरवश्योपजीव्या[४],–इति श्लोकत्रयेणोच्यते । सौगतोक्तकार्यकारणभावपरमार्थोऽपि अस्मत्पक्षमेवावलम्बते, नो चेत् न किंचित्[५],–इति त्रिभिः श्लोकैः; सांख्योपदर्शितोऽपि कार्यकारणभावो नोपपद्यते, यद्यस्मदुक्तं चेतनस्य कर्तृत्वं नाङ्गीक्रियते,–इति त्रिभिः; चेतनस्यापि अनीश्वरतायां नैतद् घटते,–इति द्वाभ्यामिति संक्षेपार्थः । ग्रन्थार्थस्तु व्याख्यायते ।

एवं क्रियाशक्तिमुखेन प्रमात्रेकरूपतां

३ कारणविचारप्रसंगात् ।

४ अवष्टम्भनीया ।

५ परमार्थरहिता ।

भगवति व्यवहर्तव्यां प्रसाध्य, कर्तृरूपतापि तत एवायत्नसिद्धा,—इति दर्शयितुमाह

एष चानन्तशक्तित्वा-
देवमाभासयत्यमून् ।
भावानिच्छावशादेषा
क्रिया निर्मातृतास्य सा ॥ १ ॥

चोऽवधारणे । एष एव पुराणः प्रमाता अमून् भावान् आभासितपूर्वान् आभासमानान्[6] आभासयति अविच्छिन्नेन प्रबन्धेन । कथम्, इच्छाया ईशितुरभिन्नाया अविकल्परूपाया अक्रमाया वशेन सामर्थ्येन । कुत्रास्य ते भावाः स्थिताः,? आह, 'अनन्तशक्तित्वात्' इति । विश्वे हि भावास्तस्यैव शक्तिरूपेण स्वरूपात्मत्वेन स्थिताः,—इत्युक्तं

'स्वामिनश्चात्मसंस्थस्य ...................... ।' (१।५।१०)

इत्यत्र । यदेतदाभासनं या साविच्छा, सा[7] [illegible]या, अस्य भगवतो निर्मातृत्वम् ॥ १ ॥

---

[6] [illegible] स्वात्मन्याभासमानान् कर्तृप्रयोजकीकारेणाभासवतः [illegible]।

[7] [illegible]

[8] [illegible]

ननु बीजादङ्कुर उद्भवन् दृश्यते, नच अत्र कश्चिच्चेतनोऽनुप्रविशन् दृष्टः, तत्कथमेतदु[९]क्तम्?,—इत्याशङ्क्याह

जडस्य तु न सा शक्तिः
सत्ता यदसतः सतः ।
कर्तृकर्मत्वतत्त्वैव
कार्यकारणता ततः ॥ २ ॥

जडस्य बीजस्यैवं-भूतं सामर्थ्यं नास्ति—यत् असद्रूपं सद्रूपं वाङ्कुरं परिदृश्यमानसत्तावन्तं करोति। बीजादङ्कुरो जायते,—इति नाङ्कुरस्य महिमा असत्त्वात्; अङ्कुरो जायत,—इति च महिमा कथं बीज[१०]स्य, ततोऽङ्कुरादन्यत्वात्; यत एवं त[११]स्मात् कार्यं क्रियाशक्त्या अवभास्यमानं कर्मैव,—इति कृत्ये-

---

९ चिद्रूप एव विश्वावभासक इति ।

१० अयं भावः—अङ्कुरं बीजे सदसद्वा तत्र तावन्नास्ति विरोधः इयद्विचार्यं या तस्याङ्कुरस्य परिदृश्यमाना सत्ता तत्र सामर्थ्यं तद्रूपतापादनं बीजस्य नास्ति जडत्वात् ।

११ जडस्य शक्त्यनुपपत्तेः ।

नैव आविष्कृतम्, कार्यते अनेन[12] कर्ता तत्स-मर्थाचरणेन,—इति कारणमपि कर्तरि चेतने विश्राम्यति । असतः सतः इति असद्रूपस्य सत इत्यर्थः । वार्थो वात्र गर्भीकृतः, असतोऽ-ङ्कुरस्य सतो वा बीजस्य,—इति; अङ्कुरस्य स-तोऽसतो वा[13],—इत्येवं वा ॥ २ ॥

ननु जडस्य कथमेषा शक्तिर्न भवति,—इत्याह

यदसत्तदसद्युक्ता[14]
नासतः सत्स्वरूपता ।
सतोऽपि न पुनः सत्ता-
लाभेनार्थः........

सद्वा कार्यमसद्वा संभाव्यते[15]; उभयात्मकम्, अनुभयात्मकम्[16] अनिर्वाच्यम्,—इति तु स्ववाचैव

---

१२ अनेन चेतनेनाङ्कुरः कर्ता बीजादिसाहित्येनावभासमानोऽवभास्यते तत्समर्थाचरणं तु देहाद्यपेक्षया बहीरूपतयावभासनमात्रम्, ततश्च क्रियाशक्त्याभास्यमानं कर्मैव कार्यं भासयिता च कर्तैव कारणमिति कर्तृकर्मभावतत्त्वता ।

१३ यथा प्रथमव्याख्यानम् ।

१४ यदसत्तदसदिति स्वयमेव विवृणोति युक्तेति ।

१५ भवद्भिः स्वप्रीत्या मन्यते । उभयेति सदसद्रूपम् ।

१६ एकत्रैव कथं सद्रूपत्वमसद्रूपत्वं वा इति विरोधः । अनुभया-

विरुध्यते; तत् किमनेन । यदि असन् घटः, तर्हि तस्यासद्रूपतैव परमार्थतः,–इति कथं स्वरूपविरुद्धं सत्त्वमभ्युपगच्छेत्, नहि पादपतनशतैरपि नीलमात्मनि पीतिमानं मृष्यते । अथ सन्नेव घटस्तर्हि किमन्यत् उपयाच्यते [१७]दण्डचक्रसूत्रात् । अभिव्यक्तिविषयत्वस्फुटत्वाद्योऽपि सदसद्रू[१८]पतया चिन्त्याः ॥

नन्वेवं तूष्णीमास्यतां, नैतदपि युक्तम्,– इत्याह

........[१९]अथ चोच्यते ॥ ३ ॥

कार्यकारणता लोके

तदवश्यसमर्थ्योऽयमर्थ इति यावत् ॥ ३ ॥

---

त्मत्वे किं तत्पुनरिति वाच्यम्, अनिर्वाच्यं च सदसद्रूपत्वेन च कथ्यते चेति किमेतदिति त्रिकेपि स्ववाग्विरोधः । द्वयं तु शिष्यते इति तदेव विविनक्ति यदीति ।

१७ दण्डचक्रादिभिर्हि यथा दध्नो नवनीतं दण्डादिनाभिव्यक्तीक्रियते तथा सदपि व्यक्तीक्रियते इति तदयुक्तं, तदपि चाभिव्यक्तिविषयत्वादि किं सद्रूपमुतासद्रूपम् असत्त्वं पूर्ववत् सत्त्वे पुनः किमभिव्यक्तिविषयत्वेनेति ।

१८ उभयरूपतासंभवे इति ।

१९ अथ चेति विवेकपूर्वमवसरदाने ।

ततश्च इत्थमुपपाद्यत,—इति दर्शयति

सान्तर्विपरिवर्तिनः ।
उभयेन्द्रियवेद्यत्वं[20]
तस्य कस्यापि शक्तितः ॥ ४ ॥

कुम्भकारहृदये अन्तर्[21]मनोगोचरत्वात् पूर्वमपि स्वसंविदेकात्मतया विचित्रत्वेन विश्वस्य भेदाभेदात्मना परिवर्तमानस्य स्पन्दनेन स्फुरतो यत् अन्तःकरणबहिष्करणद्वयवेद्यत्वमा[22]भास्यते, एषैव सा कार्यकारणता । उभयग्रहणमुपलक्षणम्, यस्य यावति पूर्णार्थक्रियासमाप्तिरिति यावत् । सु[23]खादीनाम् अन्तःकरणैकवेद्यतापादनमेव निर्माणं, न च कुम्भकारे प्राणपुर्यष्टकबुद्धिशून्यदेहप्राये

२० स्फुटपरिपूर्णाभिमतार्थक्रियाकार्याभासत्वमित्यर्थः ।

२१ अन्तःशब्दस्यार्थमाह मन इति एकात्मतयेत्यन्तम् । पूर्वमिति प्राच्यावस्थायाम् ।

२२ घटादेरित्यर्थः ।

२३ अर्थक्रियापरिसमाप्तिमाह सुखादीनामित्युपलक्षणं तेनान्तर्बहिष्करणद्वयवेद्यत्वं च घटादेरिति बोध्यम् ।

तदेतत् स्थितं, तस्यापि जडत्वात्; ततः संविदेव विश्वमात्मनि भासयति शक्तिवैचित्र्यात् । तस्य कस्यापि इति पूर्वमुक्तस्य अचिन्त्यापर्यनुयोज्यमहिम्न इत्यर्थः । नच वाच्यम्—उभयेन्द्रियवेद्यत्वमपि सदसद् वा,—इति; यतोऽयमत्र परमार्थः—यथा दर्पणान्तः[२४]कुम्भकारनिर्वर्त्यमानघटादिप्रतिबिम्बे दर्पणस्यैव तथावभासनमहिमा, तथा[२५] स्वप्नदर्शने संविदः, तथापि तन्महिम्नैव एतेन इदं बहिः स्फुटरूपं क्रियत,—इत्यभिमान उल्लसति । एवं संविन्महिम्ना कुम्भकृति दण्डचक्रादौ घटेऽवस्थिते तन्महिम्नैव अभिमानो जायते; यथा मया इदं कृतम्, अनेन इदं कृतं, मम हृदये स्फुरितम्, अस्य हृदये स्फुरितमिति । तत्र जडस्य मृदादेर्दूरापेतोऽभिमान,—इति संवित्स्वभावे कर्तृत्वं व्यवस्थाप्यते । ननु

---

२४ यथा दर्पणस्य स्वप्नसंकल्पेषु कुम्भकारनिर्मीयमाणोऽयं घट इत्याभासेपि तत्त्वतो दर्पणादिकस्यैव महिमा तथैव संविद एव घटाभासेन महिमा कुम्भकारनिर्मीयमाणत्वाभिमानोत्थापनेपि एवं संविन्महिमा ।

२५ तथेति दृष्टान्तान्तरम् । तदिति संवित् । एतेनेति कुम्भकृता ।

भावरूपमेव इत्थं[२६] भास्यतां किं द्वयेन्द्रियवेद्यत्वेनोक्तमत्र, स्फुटमर्थक्रियाक्षमं[२७] रूपमनेनोक्तम्,—इति को विरोधः[२८] ॥ ४ ॥

अनेन च विचारेण प्रकृतमपि क्रियास्वरूपं सिद्धं भवति,—इति दर्शयति

एवमेका क्रिया सैषा
सक्रमान्तर्बहिःस्थितिः ।
एकस्यैवोभयाकार-
सहिष्णोरुपपादिता ॥ ५ ॥

सैषेति, यस्याः 'स्वरूपत आश्रयतश्च नोपपद्यते' इति उपालम्भः कृतः, सा उपपत्त्या स्थापिता। यतः संविद्रूपादान्तरात् प्रभृति इन्द्रियगोचरतया बहिष्पर्यन्ततया स्थितिराभासरूपा, तत एव वेद्यात्मक[२९]कर्मालिङ्गनेन

---

२६ बहीरूपतया ।

२७ उभयेन्द्रियवेद्यत्वेन स्फुटमर्थक्रियाकार्याभासरूपं लक्ष्यते इत्यर्थः ।

२८ नियतैकरूपतावलम्बनेन हि स उपपद्यते ।

२९ न चैवं वक्तव्यं सुखाद्याभासेऽन्तस्त्वैवास्ति न बहिष्ट्वमिति च कुतोऽस्य सक्रमत्वमित्याशङ्कां गर्भीकृत्याह वेद्यात्मकेत्यादि । अन्तर्बहीरूपता सुखादीनामस्त्येव तथा च क्रमिकत्वम् तथाहि नहि सुखस्येष्यमाणतायां य एवाभासः स एव लाभे लाभानुपपत्तिर्हि तथा स्यात् ।

सक्रमा तावदुपपन्ना, [३०]कर्तृकर्मैकाश्रयतादात्म्याच्च एका। स च एक आश्रयः संविद्रूपत्वेन स्वच्छत्वस्वतन्त्रत्वाभ्यामुभयमप्यन्तर्बहीरूपं [३१]संहत इति ॥ ५ ॥

ननु भवतु घटादा[३२]वेवं, यत्र तु बीजाङ्कुरादौ चेतनानुप्रवेशो न दृश्यते तत्र कथं बीजस्यैवाङ्कुरः कार्यो न भवति? इत्याशङ्क्याह

बहिस्तस्यैव तत्कार्यं
यदन्तर्यदपेक्षया ।

---

३० कर्तृकर्मेति । ननु क्रिया हि कर्तृव्यापारः तथा च कर्त्राश्रयत्वमेव क्रियायाः सूक्तं कथमत्रान्तःकर्मैकाश्रयत्वमपि वर्णितम् । अत्रोक्तमाचार्यैः सर्वैव तावत् क्रिया कर्तृस्था, काचित् कर्मण्यपि विशेषदर्शनातिशयात् कर्मस्थोच्यते । यथाह भाष्यकारः साधारण्येन व्यपदेशा भवन्तीति तथा च पचतीति गच्छतीति च कर्मणोऽपि प्रकाशमानस्य संविदात्मकप्रमातृसारत्वात् समकक्ष्यतया कर्तृस्था कर्मस्था च क्रियोच्यते, तथा च द्वयस्था हि प्रसिद्धा कर्तृकर्मस्थत्वाभ्यां कर्मणोऽपि चान्तर्बहिरुभयाकारसहत्वमस्त्येव परामर्शाभेदात् । यथाह हरिः

'कर्मस्थः पचतेर्भावः कर्मस्था च भिदेः क्रिया ।
असासिभावः कर्तृस्थः कर्तृस्था च गमेः क्रिया' ॥

इति । गच्छतिपचत्यादौ स्वरूपतोऽनैक्येप्याश्रयैक्येनैक्यम् ।

३१ पूर्वापरभागयोगेन भिन्नावभासस्यापि परामर्शेनानुसंधानलक्षणेनोभयरूपसहिष्णुत्वम् ।

३२ एकस्यैव प्रमातुः संविद्रूपस्योभयाकारसहत्वात् एका क्रिया इति । यदुक्तं तस्य कस्यापि शक्तित इति । क्रियया हि कारणत्वं बीजादौ चाचेतने तद्विरहात् कथं चेतनानुप्रवेश इत्यत्र स्वयमेव कारणता युक्ता ।

प्रमात्रपेक्षया चोक्ता
द्वयी बाह्यान्तरस्थितिः ॥ ६ ॥
मातैव कारणं तेन
स चाभासद्वयस्थितौ ।
कार्यस्य स्थित एवैक-
स्तदेकस्य क्रियोदिता ॥ ७ ॥

अन्तराभासमानस्य तथारूपापरित्यागेनैव बहिराभासनं निर्माणं, ततश्च यद् वस्तु यमपेक्ष्य अन्तरित्युक्तं तद् वस्तु तस्यैव आन्तरवस्तुरूपविपरिवृत्तिमात्रस्य बहिष्करणार्हं भवति, संविद्रूपं[३३] च प्रमातारमपेक्ष्य अन्तराभासिनो भावास्तदपेक्षयैव बाह्याभासाः,—इति तेनैव तेषां बहिष्करणावभासनं युक्तं; ततश्च[३४] प्रमातैव कारणं भवति न जडः। द्व्यर्थे चः। यस्मात् स प्रमाता कार्यस्यान्तर्बहिराभा-[३५]

---

३३ ननु च बीजापेक्षयान्तरत्वमस्त्वित्यत आह संविद्रूपं चेति तेनायमर्थः चिद्रूपाभेदसंक्रान्ततयैव बीजान्तर्गमनमपि संभावनीयमिति।

३४ यतः कार्यं न जडस्य तत एव कारणं न जडं युक्तम्। तद्धि नियतिशक्तिपुरःसरीकृते शरीरकल्पे इव चिद्रूपस्य जडे बीजादावौपचारिकं नतु जडस्य किंचित् सामर्थ्यम्।

३५ बाह्यान्तरतया स्थितस्य।

सनद्वयनिमित्ततया स्थितस्तेन विना तदपे-क्षस्याभासद्वयस्यानुपपत्तेः; तस्मादेकस्य प्रमातु-रेव न तु कथंचित् जडस्य उदिता प्रसाधि-तरूपा क्रिया निर्मातृता भवतीति ॥ ७ ॥

एतदेव द्रढयति

[३६]अत एवाङ्कुरेऽपीष्टो
निमित्तं परमेश्वरः ।
तदन्यस्यापि बीजादे-
र्हेतुता नोपपद्यते ॥ ८ ॥

यत एवं चेतन एव निर्माता, अत एव नैयायिकादिभिरङ्कुरादौ बुद्धिमानेव परमेश्वरो हेतुत्वेन इष्टः । ननु तैः निमित्त-कारणतास्य अङ्गीकृता[३७] क्रियाविभागादिक्र-मायातपरमाण्वादिद्वारकतया; समवायिकार-

---

३६ चिन्मयस्यैव कर्तृत्वोपपत्तेः अदृष्टचेतनकर्तृकस्याङ्कुरादेरपि अन्यैः कल्प्यते तथाभूत ईश्वरः कर्ता, न चापि पूर्वोक्तया नीत्या वक्ष्यमाणया वा तमीश्वरं विना बीजादेः कारणता न्याय्येत्याह अत एवेति । इष्ट इति नैयायिकानाम् । अर्धाङ्गीकारेण बाधमाह तदन्येति ।

३७ क्रियाविभागादिक्रमे हीश्वरस्य निमित्तत्वं परं त्वत्र समवायिका-णत्वं निजावयवारम्भकाणां बीजादीनामिति तन्मतम् ।

णनिजावयवारम्भपरम्परया तु तत ईश्वराद्न्यस्यापि बीजभूमिजलादेर्हेतुता कथिता। सत्यम्; कथिता, सा तु नोपपद्यते, उक्तयुक्त्या जडस्य हेतुतायोगात्; [३८]ततश्चेश्वर एव बीजभूमिजलाभाससाहित्येनाङ्कुरात्मना भासते,—इतीयानत्र परमार्थः॥ ८॥

ननु परिदृष्टबीजादिव्यतिरिक्तबुद्धिमत्कारणकल्पनेन विना किमुपरुध्यत,—इति परस्य भ्रान्तिं भिन्दन्नाह

[३९]तथा हि कुम्भकारोऽसा-
वैश्वर्यैव व्यवस्थया।
तत्तन्मृदादिसंस्कार-
क्रमेण जनयेद् घटम्॥ ९॥

'तथा हि' इति निदर्शनोपक्रमेण व्याप्तिरेवं-

---

३८ किं पुनरिहायातमित्याह तत इति। ईश्वर एव नियतिशक्तिमनुरुन्धानः।

३९ यत्र साक्षात् बुद्धिमान् कुम्भकारादिः कर्ता दृष्टस्तत्रापि स एवेश्वरः कर्ता यत्र पुनर्न दृष्टः कोऽपि तत्र किं वक्तव्यमित्याशयशेषेण तथाहीत्याह सर्वत्र चेतनेन विना न जडस्य कारणता चेतनश्चेश्वर एव पर्यवस्यतीति कुम्भकारदृष्टान्तेन द्रढयति इति सूत्रार्थः।

भूतैव दृष्टा,—इति द्रढयति। जडा हेतवश्चेतनप्रेरिताः कार्यं कुर्वन्ति, मृदादयो [४०]यदि सन्निधिमात्रेण विदध्युः कुम्भकारेण किमत्र कृत्यम्; शिविकस्तूपकादिपरम्परया ते जनयन्ति; सा च कुम्भकारायत्ता,—इति चेत् सिद्धं नः साध्यम्। शिविकसंपादनेऽपि ते चेतनप्रेरणामपेक्षन्ते,—इति। तज्जडकारणानां चेतनप्रेरणामन्तरेण न क्वचि[४१]त् कार्यकारित्वम्; यदि हि स्यात् मृदादीनामपि स्यात्,—इति एकान्त एषः। [४२]ततश्च यत् अचेतनं कार्यकारि तत् चेतनापेक्षं मृदादय इवं, तथा च बीजादि,—इति स्वभावः। अचेतनकार्यकारित्वं हि कादाचित्कत्वात् सनिमित्तम्, न चान्यदस्य निमित्तमुपपद्यते अनुपलम्भात्,—इति चेतनप्रेरणं यदि न निमित्तीकुर्यात् व्यापकविरुद्धमन्यनिमित्तकत्वं प्रसज्येत; न च युक्तं तत्, मृदादावपि तस्य प्रसङ्गात्,—इति सिद्धा

४० चेतनप्रेरिताः कार्यं कुर्वन्तीति सिद्धमेव तत्र प्रेरणमेव विकल्पयति यदि हीत्यादिना। घटादिसंनिधावपि किं कुर्युः संनिधेरविशेषात्।

४१ बीजादावपि।

४२ तत इति अयं प्रयोग इति शेषः।

व्याप्तिः; अतश्च कुम्भकृदेव तत्रेश्वरः। तदेतदाह—ईश्वररूपा या व्यवस्था, तया यः स स मृद्दण्डचक्रादीनां संस्कारः, मृदो मर्दनं, दण्डस्य प्रगुणत्वं[४३], चक्रस्य परिवर्तनम्,—इत्यादिः, तदारम्भो यः क्रमः शिविकस्तूपकादिरूपः, तेन घटं नियोगतो[४४] जनयति, नान्यथा,—इति नियोगे[४५] लिङ्। किं च यदि न क्रुध्यते वस्तुतः कुम्भकारोऽपि ऐश्वर्यैव स्वतन्त्रविश्वात्मतारूपया व्यवस्थया मृदादिसंस्कारापेक्षया प्रदर्शितनियत्यभिधाननिजशक्तिविजृम्भातो घटं जनयेत्; अन्यथा[४६] अचेतना मृदादयः कथं कुम्भकारेच्छामनुरुध्येरन्[४७], तन्तवोऽपि वा पटसंपादनेच्छां किं नाद्रियेरन्[४८]। तदेत-

४३ कार्यक्षमत्वम्।

४४ ईश्वरनियतितः।

४५ अवश्यंभावो नियोगः।

४६ ततश्चेदमुक्तं भवति चेतनसंनिधिमन्तरेण कार्यानुत्पाद इति हि ईश्वरो बीजादौ कल्प्यते सत्यं अस्त्येवैवं घटादौ कुलालादेः बुद्धिमतः संनिधिरस्त्येवेत्यत्र कृतमीश्वरेण कर्त्रेति यदुक्तं तन्निरस्तमन्यथेत्यादिना।

४७ तदनुरोधे पुनः स्वातन्त्र्यशक्तिरेव हेतुः।

४८ अनाश्रयणे हि नियतिर्हेतुः।

दपि उक्तम् अनेनैव सूत्रेण 'तथा हि' इति । नन्वेवं कुम्भकृतो नास्ति कर्तृत्वम्,—इति समुत्सीदेत् धर्माधर्मव्यवस्था[४९] । यदि प्रत्येषि युक्त्यागमयोः, तत् एवमेव; तथापि समस्तेतरनिर्माणमध्य एव इदमपि परमेश्वरेणैव निर्मितं, यदविचलस्तस्य कुम्भकारपशोर्मिथ्या कर्तृत्वाभिमानः[५०] प्रतिभुव इव अधमर्णताभिमानः; यदि पुनर् ईश्वरस्येच्छैव इयमीदृशी 'मा अस्य अभिमानोऽयम् उद्गमत्' इति, तदा नासौ कर्ता कश्चित् । तदिदमपि उक्तं सूत्रेणैव 'तथा हि' इति । कुम्भकारस्यापि 'मृदादिसंस्कारक्रमेण किं घटं जनयामि, उत न जनयामि' इति य एकपक्षनिश्चयाय संप्रश्नात्मा विचारः, स ईश्वरसंबन्धिन एव विविधात् स्वरूपावच्छादनतत्त्वप्रकाशनरूपात् अवस्थानात्,—इति संप्रश्ने लिङ् । तस्मात् वस्तुत 'ईश्वर एव सर्वत्र कर्ता, अहं

---

४९ कृतेपि धर्मे परमेश्वरेणेदं कृतमिति न कस्यापि धर्मफलभागित्वं तथाधर्मेपि ।

५० ततश्च मिथ्याकर्तृत्वाभिमानेन धर्माधर्मव्यवस्थापि सेत्स्यतीति ।

च स एव' इति न परिमिते कर्ता, अपि तु सर्वत्र कर्ता,—इति एतावति सर्वथा हृदयेन अवधातव्यम्,—इति स्थितम् ॥ ९ ॥

दृश्यते चास्य चेतनस्य स्वातन्त्र्यमेव सर्वत्र[५१] जृम्भमाणं जडानपि यत्[५२] स्वात्मतामापादयति, न तु जडानां वस्त्वन्तराविष्करणे सामर्थ्यम्,—इति यदुक्तं, तत् सर्ववादिप्रसिद्धनिदर्शनेन[५३] द्रढयति

योगिनामपि मृद्बीजे[५४]
विनैवेच्छावशेन तत् ।

---

५१ स्वप्नसंकल्पादौ ।

५२ यत्–यस्मात् ।

५३ दृष्टमेव हि चेतनस्य कार्यकरणं स्वप्नमनोरथयोः । यदाह भट्ट-दिवाकरवत्सः

'न दृश्यते त्वत्प्रतिभासशक्तेः स्वप्नेऽर्थवैचित्र्यनिमित्तमन्यत् ।
तद्दृष्टसामर्थ्यतया सदैषा विश्वप्रपञ्चप्रथनैकहेतुः ॥'

इति । तत्र बहुधा विप्रतिपत्तिर्वादिनां, तदत्र यदेव निर्विप्रतिपत्तियोगि-निदर्शनं तदेव दर्शयतीत्याशयेन विवृणोति सर्ववादिप्रसिद्धयोगिनि-दर्शनेनेति ।

५४ मृद्बीजे विनापीति संबन्धः । व्यक्तिप्रधानतया कारणत्वाज्जाति-परतोचिता अत्र नैकवद्भावः । उभयोपादानं जडैकहेतुकं लोकप्रसिद्धं चेतनापेक्षं चोभयमपि कार्यं निदर्शयितुमाह यदिहेति ।

घटादि जायते तत्त-
त्स्थिरस्वार्थक्रियाकरम् ॥ १० ॥

यत् इह चेतनप्रेरितं कारणम्,—इति प्रसिद्धं मृदादि, यच्च तदनपेक्षं बीजादि घटादेरङ्कुरादेश्च जनकं, तदेव[55] यदि परमार्थतः कारणं स्यात् तत् तद्व्यतिरेकेण घटाङ्कुरादेः कथं योगीच्छामात्रेण जन्म स्यात्, अकारणत्वप्रसङ्गात् [56]तेषां वा अकारणत्वापत्तेः । अथोच्यते—अन्ये एव ते घटाङ्कुरादयो मृद्बीजादिजन्याः, अन्ये एव च योगीच्छादिजन्याः,—इति, [57]तत्रापि प्रबोध्यसे—विमर्शाभेदात् तावदभेद,—इति पूर्वमेव उक्तम्; तत्रापि योगी खलु अप्रतिहतेच्छः, तस्य च इच्छा—तादृगेव घटो भवतु यो मृदादिकृतकुम्भसंभवभूयर्थक्रियाकरणच-

---

५५ यदि च परमार्थतः त एव कारणं तर्हि योगिनिर्मितघटादौ तदभावात् तेषामेव यदि नियतं तदा तदिच्छायास्तदसंभवादकारण त्वापत्तिः ।

५६ तेषामिति मृदादीनाम् ।

५७ ननु घटाङ्कुरादौ शब्दसाम्यमात्रमेव वस्तुतोऽन्यदेव तदिति मन्तव्यमित्याह तत्रापीति । य एव मृदादिजन्ये घटादौ विमर्शः स एव योगीच्छाजन्ये इति विमर्शाभेदात् कुतो भेदः ।

तुरवृत्तिरिति। तदेतदाह—तस्य[५८] तस्य स्थिरस्य अर्थक्रियान्तरानुबन्धिनः कालान्तरानुबन्धिनश्च स्वस्य आत्मीयस्य अर्थक्रियाविशेषस्य करणे हेतुतच्छीलानुकूलरूपं घटादि जायते,—इति। ये त्वाहुः[५९]—नोपादानं विना घटाद्युत्पत्तिः, योगी तु इच्छया परमाणून् पश्यन् संघट्टयतीति। ते वाच्याः—यदि खलु अन्वयव्यतिरेकागमादिपरिदृष्टः कार्यकारणभावो योगिषु न विपर्येति,—इति हृदयमावर्जयति[६०] वः, तत् किं परमाणुग्रहेण; नो चेत् घटस्य कपालादि शरीरस्य स्वावयवाः, तेषां निजं निजं प्रसिद्धं तृणशस्तिलशोऽपि अन्यथाभवनमसहमानं लौकिकमेव कारणम्,—इति घटे मृद्दण्डचक्रादि, देहे स्त्रीपुरुषसंयोगादि सर्वमपेक्ष्यं परिदृष्टदीर्घतरकालपरिवासमिति[६१]। योगीच्छया तु समनन्तरो-

---

५८ विचित्रस्य।

५९ नैयायिकाः।

६० स्वायत्तीकरोति।

६१ तथापि किं भवतः सिध्यति यदेतदुक्तं तथैवास्तु इत्यत्र दोषमाह परिदृष्टेति। कपालाद्यं स्वावयवं स्त्रीपुरुषसंयोगादि च।

दितघटदेहादिसंभवो दुःसमर्थ एव । चेतन एव तु तथा तथा भवति भगवान् भूरिभर्गो महादेवो नियत्यनुवर्तनो[62]ल्लङ्घनघनतरस्वातन्त्र्यः,—इत्यत्र पक्षे नियत्यनुवर्तिनि लौकिके प्रसिद्धे कार्यकारणभावे स्वातन्त्र्यं, तदुल्लङ्घनमाद्रियमाणस्य तु योगिप्रायप्रसिद्धे लोकोत्तरे,—इति न कश्चित् विरोधः । [63]ईयान् च लोक एव, परमार्थतस्तु स एव क्रमाक्रमरूपविश्वसृष्ट्यादिकृत्यपञ्चकप्रपञ्चस्वभावः प्रकाशते; चेतनो हि स्वात्मदर्पणे भावान् प्रतिबिम्बवदाभासयति,—इति सिद्धान्तः । यदाह पूर्वगुरुः

'निरुपादानसंभारमभित्तावेव तन्वते ।
जगच्चित्रं नमस्तस्मै कलाश्लाघ्याय शूलिने ॥'

( स्तवचि० ९ श्लो० )

इति ॥ १० ॥

ननु यदि प्रसिद्धकारणोल्लङ्घनेनापि त[64]त्कारणजन्यकार्यविशेषतुल्यवृत्तान्येव कार्याणि

६२ लौकिकघटादौ अनुवर्तनं योगिनिर्मिते तदुल्लङ्घनम् ।

६३ योगिनिर्माणमपि कुविन्दकृतिवन्मायाकृताभिमानसारमेव वस्तुतस्तु तदपीश्वरनिर्माणमेवेत्याह इयानिति । स इति परमेश्वर एव ।

६४ प्रसिद्धकारणम् ।

६५ कल्पितमकल्पितं वा अविनाभावि । अयं भावः यो हि यदा-

जायन्ते, भग्नास्तर्हि अनुमानकथाः। तथा हि कथमन्यदन्यत्र नियमवद्भवेत्[६५] ?,–इत्याशङ्क्य प्रामाणिकतरम्मन्यैस्तादात्म्यतदुत्पत्ती नियमनिदानमुपगते; नहि निःस्वभावं वस्तु भवति, नापि भिन्नस्वभावं स्वभावभेदेन भेदात्; पर्यायशस्तत्स्वभावद्वया[६६]भावे च निःस्वभावताप्रसङ्गात्। एवं निर्हेतुके भिन्नहेतुके च कार्ये वाच्यम्। उभयत्रा[६७]पि च हेतुकृतैव व्यवस्था; स्वहेतुत एव हि शिंशपा वृक्षस्वभावा[६८]व्यभिचारिणी जाता, स्वहेतुतश्च हुतभुग्धूमजनन[६९]स्वभावः, तदिदानीं नियत्युल्लङ्घिनि कार्यकारणभावे सर्वमिदं विघटेत। योगीच्छया हि शिं-

---

त्मा भावः स कथं तमुत्सृजति वृक्षात्मकैव हि शिंशपा तेन वृक्षत्वमनुमापयति सोऽयं स्वभावहेतुरुच्यते वृक्षोऽयं शिंशपात्वादिति। तत्र तादात्म्यमेव प्रतिबन्धः कार्यं च नाम कारणाधीनात्मलाभमेव भवति न कारणानपेक्षमिति तदुपलभ्यमानं तदनुमापयति अग्निरत्र धूमादिति कार्यहेतौ तदुत्पत्तिः प्रतिबन्ध इति तादात्म्यतदुत्पत्ती भिक्षुभिर्नियमनिदानमुक्ते।

६६ एकैकत्यागे च।

६७ तादात्म्यतदुत्पत्त्योः। उभयमप्येतत्कारणनियमादेवेत्यर्थः।

६८ शिंशपाया वृक्षस्वभावभाज एव कारणादुत्पत्तेः।

६९ हुतभुग्विशेषस्य च धूमजननस्वभावभाजः।

शपापि अवृक्षस्वभावा भवेत्, धूमे[७०] तु द्विगुणं चोद्यम्; अग्न्यादिसामग्री योगीच्छोद्भूता धूमं न जनयेत्, योगीच्छा वा अनग्निकं धूमम्,— इति न स्यादनुमानम्[७१], अस्ति च तल्लोके, इत्याशङ्क्याह

योगिनिर्माणताभावे[७२]
प्रमाणान्तरनिश्चिते।
कार्यं हेतुः स्वभावो वा-
त एवोत्पत्तिमूलजः॥ ११॥

योगीच्छापि सर्वथा तादृशमेव[७३] न तु वृश्चिकगोमयादिसंभूतवृश्चिकादिन्यायेन कथंचित् रसवीर्यादिना भिन्नं कार्यं जनयति,—इति यत् कथितमत एवास्मादेव हेतोः कार्यं वा

---

७० कार्यहेतौ।

७१ कथं लौकिकमनुमानं स्यादित्यर्थः।

७२ यत् कथितम् अप्रतिहता योगीच्छेति अत एव हेतोः योगिनिर्माणताभाव इति विशेषणं प्रमाणान्तरेण यदि निश्चितं भवति तदा कार्यहेतुः स्वभावहेतुश्च कारणे स्वभावे चानुमातव्ये हेतुर्भवति नान्यथा।

७३ प्रसिद्धकारणसदृक्षं न तु पुनर्योगीच्छा भिन्नं कार्यं जनयति। तत्र दार्ढ्यमाह वृश्चिकेति यादृशात् स भूतो वृश्चिकस्तादृश एव गोमयादपीति न्यायेन।

धूमादि अग्न्यनुमाने, शिंशपात्वादिस्वभावो वा वृक्षत्वाद्यनुमाने एवं हेतुर्भवति[७४], यदि प्रमाणान्तरेण लोकप्रसिद्ध्या योगिनिर्माणत्वस्वाभावो निश्चितो भवति नान्यथा; अत एवानुमाने जन्मान्तराभ्यासलोकप्रसिद्ध्या[७५]दिकमवश्योपजीव्यम् । सा च श्रुतानुमानप्रज्ञयोर्बीजम्,—इति च [७६]ऋतंभराविषयमुवाच

---

७४ कारणेऽनुमातव्ये स्वभावे चानुमातव्ये कार्यहेतुः स्वभावहेतुश्च एवमिति यदुक्तं तदाह यदीति ।

७५ मानसं वा प्रत्यक्षं लोकप्रसिद्धिरागमः प्रतिभाविशेषोऽनन्तजन्माभ्यासमूलस्तत्कालघटितो वा अर्थापत्तिर्वा ॥

७६ ऋतम्भरा समाधिप्रज्ञा 'ऋतंभरा तत्र प्रज्ञे'त्यत्र योगसूत्रे निर्दिष्टा । अत्र भाष्यम्—तस्मिन् समाहितचित्तस्य या प्रज्ञा जायते तस्या ऋतम्भरेति संज्ञा भवति अन्वर्था च सा सत्यमेव बिभर्ति नच तत्र विपर्यासगन्धोऽप्यस्तीति तथा चोक्तम् "आगमेनानुमानेन तथाभ्यासरसेन च । त्रिधा प्रकल्पयन् प्रज्ञां लभते योगमुत्तमम् ॥" इति सा पुनः 'श्रुतानुमानप्रज्ञाभ्यामन्यविषया विशेषार्थविषयत्वात्' श्रुतमागमविज्ञानं तत्सामान्यविषयं नहि आगमेन शक्यो विशेषोऽभिधातुं कस्मात् नहि विशेषेण कृतसंकेतः शब्दः तथानुमानं सामान्यविषयमेव यत्र प्राप्तिस्तत्र गतिः—यत्र न प्राप्तिस्तत्र गतिरपि न भवतीति तस्मात् श्रुतानुमानविषये विशेषो न कश्चिदस्तीति । न चास्य विशेषस्याप्रामाणिकस्याभावोऽस्तीति समाधिप्रज्ञातिग्राह्य एव स विशेषो भवति भूतसूक्ष्मगतो वा पुरुषगतो वा, न चास्य सूक्ष्मव्यवहितविप्रकृष्टस्य वस्तुनो लोकप्रत्यक्षेण ग्रहणं तस्माच्छ्रुतानुमानप्रज्ञाभ्यामन्यविषया सा प्रज्ञा विशेषार्थत्वादिति ।

यद्वा तत्र निर्विचारविशारदाख्ये या प्रज्ञा सा ऋतं सत्यमेव बिभर्ति

पतञ्जलिः । अन्ये च यौक्तिका[७७] योगिप्रत्यक्ष-कल्पप्रत्यक्षसद्भावं समस्तवस्तुग्रहणाय कल्पितवन्तः । सांव्यवहारिके च प्रमाणे नास्माकं भरः; प्रकृतं हि अस्माकमीश्वरस्वरूपं, तच्च स्वप्रकाशमेवान्यप्रमेयोपरोधेऽपि[७८] नोपरुध्यत,—इत्युक्तमसकृत् । ननु[७९] स्वभावहेतौ किम-

---

सत्यविषया विशेषार्थत्वात् आगमानुमानज्ञाने सामान्यमात्रविषये विषयत्वात् तदासौ सा च न व्युत्थानैराकम्यते योगी तस्मात् क्षीणसमस्ताविद्यास्पर्शतया ह्येषा ऋतंभरा सा च श्रुतानुमानप्रज्ञाभ्यासेन सूक्ष्मविशेषसाक्षात्कारक्षमा अतस्ततोऽन्यविषया ऋतंभरा सूक्ष्मविषया ॥

७७ अन्ये च यौक्तिका इति तथा चाहुः मानसं प्रत्यक्षं प्रतिबन्धग्राहीति तथा च प्रत्यक्षानुपलम्भाभ्यामनलसहचरितम् अनग्नेश्च व्यावर्तमानं धूममुपलभ्य विभावसौ नियतो धूम इति मनसा प्रतिपद्यते । तथा चोक्तम् ।

'मनश्च सर्वविषयं केन वा नाभ्युपेयते ।
असंनिहितमप्यर्थमवधारयितुं क्षमम् ॥'

इति । अन्ये च योगिप्रत्यक्षकल्पं यौक्तिकं संबन्धग्राहि प्रत्यक्षं प्रतिपन्नाः । धूमत्वाग्नित्वसामान्यपुरस्कारेण व्याप्यव्यापकयोरन्वयो नाम गृह्यः ताम् व्यतिरेकस्तु अनग्निभ्यो धूमस्य ग्रहीतव्यः । अनग्नयश्चातिविततताः । नच तेष्वनग्नित्वं नाम सामन्यमस्ति तेन समस्तत्रैलोक्यान्तर्गताग्न्यनग्निगतान्वयव्यतिरेकग्राहिप्रत्यक्षव्यतिरेकेण न प्रतिबन्धोऽवधृतो भवेत् । अवधृतश्च न प्रमाणाङ्गमस्ति च प्रमा इति युक्तिबलात् प्रतिबन्धग्राहकमेकस्मिन् क्षणे प्रत्यक्षमिदमशेषव्यक्तिविषयं यौक्तिकमित्युच्यते । यौक्तिकाप्रामाणिकाः ।

७८ कोऽस्याप्रमेयस्य अनुमानदौर्बल्येपि खण्डनावकाशः ।

७९ नन्विति । सा हि चिन्ता कारणतानियमानियमत्वे । नहि अत्र

नया चिन्तया ?, आह – वृक्षत्वाव्यभिचारिण्याः शिंशपाया उत्पत्तेर्यन्मूलं कारणं तत एव स तन्मात्रानुबन्धी स्वभावो जायते,–इति; ततश्च

'एकसामग्र्यधीनस्य रूपादे रसतो गतिः ।
हेतुधर्मानुमानेन धूमेन्धनविकारवत् ॥'[१]

इति स्वभावहेतुर्न्यायः । ननु च वृश्चिकादीनां कीटगोमयाद्यनेककारणकत्वं तावत् दृष्टं, रसवीर्यादिभेदस्तु तत्र,–इत्यन्यदेतत्[२] । तद्योगिजन्यत्वमवह्निकस्यापि धूमस्य सह्यं

---

स्वभावे हेतौ कारणतानियमानियमाभ्यां किंचित् । यथा कार्यहेतौ धूमस्याग्निः कारणं तथा शिंशपात्वस्य वृक्षत्वं कारणं, वृक्षत्वात्मकमेव हि शिंशपात्वं ततश्च स्वभावहेतावन्यत्वमेव नास्ति चेति ततश्च यदुक्तम् अन्यच्चान्यत्र कथं नियमवदित्युक्तिरसंगतेत्यत्र समर्थनमाह वृक्षत्वेति अयमर्थः यदि तदात्मकमेव तत्तदवश्यं शिंशपात्वसिद्धौ तदपि सिद्धमेव भवेत् यत् किल यत्सिद्धौ न सिद्धं तच्चेत् तेन तदात्म तर्हि विश्वं विश्वेन तथा स्यात् तस्मात् न सिद्धं चेत् तत् तदवश्यमन्यत् अन्यस्य च तन्मात्रानुबन्धित्वम् अन्यत्र न युक्तमृते कार्यकारणाभ्यामिति ।

८० अयं भावः—स्वभावोपि स्वभावान्तरनियतो यो जातस्तत्रोत्पत्तिरेव कार्यकारणभावात्मिका मूलं तथाहि यतो हेतोः शिंशपाद्यजनि निजात् तत एवावृक्षत्वव्यावृत्तासौ जातेति ।

८१ रूपादेः सकाशादेकसामग्र्यधीनस्य रसस्य गतिर्ज्ञानमस्ति सार्वविभक्तिकत्वात् तसिलः । रसत इति रसस्येत्यर्थः । हेतुधर्मेति गमकरूपः । धूमेन यथा इन्धनविकारज्ञानम् ।

८२ अप्रकृतमेतत् तावदस्तु ।

नाम, स्वभावस्य तु कथं विपर्याससंभावना। न हि नीलं सदेवानीलं योगीच्छया भवति,—इति कश्चित् प्रामाणिकः प्रतीयात्। उच्यते। इह द्विविधो हि स्वभावहेतुरन्तर्लीनकार्यकारणभावस्तद्विपरीतश्च; वह्निमानयं पर्वतो धूमवत्त्वात्[८३] इति, अनित्योऽयं कृतकत्वात्[८४] इति। तत्र आद्यस्य तावत् कार्यकारणभाव एव मूलम्,—इति किं तत्रोच्यते। अपरस्तु विचार्यते, यदि तावत् कृतकत्वस्य कारणायत्तत्वं[८५] नाम स्वभावः कथम् अभवनपरिच्छिन्नभवनस्वभावता नामानित्यत्वं स्वभावः स्यात्? आभासभेदात्[८६]। अभेदे तु आभासस्य हेतु-

---

८३ धूमवतो हि अग्निमत्त्वं स्वभाव एवं भवेत् यदि धूमोऽग्नेरेव सिध्येत्।

८४ कृतकत्वादिति पराधीनतालक्षणं भवनस्वभावत्वम्, उत्पत्तियोगो हि कृतकत्वं तत्रैवानित्योऽयं शब्द इति अभवनस्वभावत्वं यतोऽत्रानित्यत्वं विनाशयोग इति हि अभवनपरिच्छिन्नभवनस्वभावता नाम स्वभावः स्यादिति तदिदमुक्तम्

अभावेन हि धर्मेण तद्वत्ता धर्मिणः कथम्।
अभावग्रहवेलायां धर्मिणोऽनुपलम्भनात्॥

इति।

८५ परायत्तत्वम्।

८६ अभवनभवनाभासद्वययोगात्।

# सिद्धावेव साध्यस्य सिद्धत्वात्, यदि परं व्यवहारः साध्यते, तरुरयं वृक्षत्वात्,-इति न्यायेन व्यवहारश्च ज्ञानाभिधानात्मा कार्य एव, तत्रैव नियतिशक्तिरङ्गीकृता भवतापि। तस्मात् सर्वेषु स्वभावहेतुष्वाभासभेदं विना व्यवहारमात्रसाधनमेव, हेत्वाभासमयत्वादेवानधिको हि तत्र साध्याभासो, व्यावृत्तीनामे-

---

८७ कृतकत्वात्। साध्यस्येति अनित्यताख्यस्य।

८८ यथा तरुरयं वृक्षत्वादित्यत्राभासभेदेऽपि व्यावहारिकभेदमाश्रित्य कार्यकारणभावः सिध्यति तथात्रापीति।

८९ ज्ञानाभिधानात्मेति अभिज्ञादिवचनरूपः। यदुक्तम्।

साध्यानुमितिवेलायां न चास्ति नियमग्रहः।
नियमग्रहकाले च न साध्यमनुमीयते॥
तेन गृहीतपूर्वः सन्निदानीं स्मृतिगोचरः।
नियमः प्रतिपत्त्यङ्गं तथावगतिदर्शनात्॥

इति।

९० यदुक्तमवतरणिकायामुभयत्रापि हेतुकृतैव व्यवस्थेति तदिदानीं स्मारयति तत्रैवेत्यादि अयं भावः—तादात्म्यतदुत्पत्ती एव कारणं स्याताम्, यथा तर्हि शिंशपा शिंशपां विना न दृश्यते तथा वृक्षत्वमपि शिंशपारहितं न दृश्यते दृश्यते च खदिरादौ शिंशपारहितं वृक्षत्वं, तस्मात् परायत्तत्वलक्षणे प्रतिबन्धे कथ्यमाने नियतिरङ्गीकृतैव भवति तत्रैव च तार्किकैर्नियम इति व्यपदेशः कृतः। किमत्रान्ततः सिद्धमित्यत आह तस्मादिति।

९१ अभेदेप्याभासस्य व्यवहारमात्रसाधनार्थमेव भेदो व्यपदिश्यते।

९२ व्यावृत्तीनां विशेषाणाम्। अभेदाभासेपि व्यवहारसाधनार्थं भेदकल्पना।

षैव वार्ता, सामान्यानामियमेव सरणिः। तस्मात् नियतिशक्त्यायत्तः शिंशपाभासवृक्षाभासयोः पूर्वनीत्या सामानाधिकरण्याभासो हेतुबलात्। ततः स्वभावोऽयं हेतुहेतुमद्भावमूल एव, तत एव सामान्येनेदमुक्तं द्रष्टव्यम्—सर्वः स्वभावहेतुरुत्पत्तिमूलजः[९३],—इति। आभासा एव च वस्तु,—इति च समर्थितं प्राक्। [९४]ततश्च शिंशपायामेकस्यामेव सृज्यमानायां

---

९३ यदुक्तमत्र नैयायिकैः।

तस्मिन्सत्येव भवनं न विना भवनं ततः।
अयमेवाविनाभावो नियमः सहचारिता॥
किं कृतो नियमोऽस्यास्मिन्निति चेन्मैवमुत्तरम्।
तदात्मतादिपक्षे तु नैष प्रश्नो निवर्तते॥
ज्वलनाज्जायते धूमो न जलादिति का गतिः।
तर्कस्य यावान् विषयः स तावति निरूप्यते॥
वस्तुस्वभावभेदे तु न तस्य प्रभविष्णुता।
अयं च विषयो युक्तं यदुक्तं नियमाद्विना॥
नार्थादर्थान्तरे ज्ञानमतस्तस्य प्रकल्पनम्।

ततश्चेदमत्र सिद्धं भवति।

पञ्चलक्षणकाल्लिङ्गाद्गृहीतान्नियमस्मृतेः।
परोक्षे लिङ्गिनि ज्ञानमनुमानं प्रचक्षते॥

इति।

९४ अत्रैवान्ततो नियमसमर्थनार्थं पुनरपि तादात्म्यप्रतिबन्धमाक्षिपति ततश्चेति। अयमर्थः—तादात्म्ये तावद्गमकाङ्गे हेतुसाध्ययोरव्यतिरेके गम्यगमकभाव एव दुरुपपादः। न खल्वगृहीतं लिङ्गं लिङ्गिप्रती-

शाखादिपदार्थान्तराणामस्पृष्टेर्वृक्षाभासस्य सामान्यात्मनः साध्यस्य नामापि नास्ति,—इति संभाव्यत एव । यत्तु[९५] तदेकरूपं विशिष्टं वृक्षत्वं तत् खलु शिंशपात्वमेव तच्च सिद्धम्,—इति न साध्यम्। कारणायत्तमिदम्,—इत्याभासेऽपि[९६] न स्यादनित्यताभासः । एवमर्थक्रि-[९७]

---

तिमाधातुमर्हति तत्रात्र शिंशपावृक्षत्वानुमाने लिङ्गी प्रतिभासते न वा, अप्रतिभासे तद्बुद्ध्या तदग्रहणात् कथं तस्य तदात्मत्वं प्रतिभासे तु लिङ्गवत्प्रत्यक्ष एव सोऽर्थ इति किमनुमानेनेत्याह शाखादिपदार्थान्तराणामस्पृष्टेरिति ।

९५ यत्त्वित्यादि च । अत्रान्ये विपरीतसमारोपव्यवच्छेदार्थमनुमानमित्याहुः तदन्ये समर्थयन्ति स्वरूपग्रहणे विपरीतारोपणावसराभावात् नहि शिरःपाण्यादिविशेषदर्शने सति स्थाणुसमारोपः प्रवर्तते तत्र तच्छेदादुपपद्येतापि नहि शिरःपाण्यादय एव पुरुष इति तद्ग्रहणेऽपि अपुरुषारोपः कामं भवेत् इह वृक्षत्वशिंशपात्वयोरभेदात् शिंशपात्वग्रहणे सति का कथा वृक्षेतरसमारोपस्येत्येतद्विशिष्टं वृक्षत्वमित्यनेन सूचितम् ।

९६ अनित्योयं कृतकत्वादिति । अनित्यतेति पूर्वमेव समर्थितमेतत् ।

९७ एवमक्षणिकवादिनैयायिकमते नियतिशक्तिं समर्थयित्वा क्षणिकवादिमतेपि प्रसक्तागतं समर्थयति एवमिति । तथाचाहुः सत्त्वमर्थक्रियाकारित्वं तच्च क्रमयौगपद्याभ्यां व्याप्तम् अक्षणिकत्वे पुनर्न क्रमसंभवः समर्थस्य क्षेपायोगात् असमर्थस्य कालान्तरेपि अजनकत्वस्वभावस्यानतिवृत्तेः युगपत् कारणमपि तत्र न संभवति तावत्कार्यकारणसमर्थस्य स्वभावस्योत्तरकालमपि अनतिवृत्तेः तस्मात् सिद्धं यत् सत् तत् क्षणिकमिति । अर्थक्रियेति । स्वभावहेतुन्यायेन अर्थक्रियाकारित्वाभासोपि क्षणिकत्वाभास इति च ।

याकारित्वाभावेऽपि क्षणिकत्वाभासाभावः,— इति नियत्यपेक्षयैव सर्वे स्वभावहेतवो नान्यथा,— इत्येकान्त एषः ॥ ११ ॥

नन्वाभासवस्तुत्ववादेऽनाभातस्य अग्नेरवस्तुत्वम्,— इत्यनाभातेन कथं धूमो जन्यते, ततश्च धूमादग्नेः कारणस्य कथमनुमानम्? [९९] इत्याशङ्क्य समर्थयितुमाह

[१००] भूयस्तत्तत्प्रमात्रेक-
वह्न्याभासादितो भवेत्।

---

९८ आभासयोरेव कार्यकारणत्वमिति फलतोऽवस्थितेरित्यर्थः। अवस्तुत्वमित्यकिंचिद्रूपत्वम्। अनाभातेनेत्यग्निना।

९९ घटाभासाद्धूमाभासो धूमाभासाच्चानन्तरमश्वाभास इति हि आभासानां न नियतमानन्तर्यमिति कथं नियत्यवलम्बनेपि धूमादग्न्यनुमानमित्याशङ्का चतुर्विंशतिसहस्र्याम्।

१०० भूयश्च पुनरपि भूयसां वान्वयव्यतिरेकपर्यायेणानियतानां तेषां क्रिमिसर्वज्ञपर्यन्तानामेक एव यो वह्न्याभासो नतु संतानभेदेन भिन्नः। आदिग्रहणाद्बीजाभासादि। तत एव धूमाभासाङ्कुराभासादि भवेज्जनितुं शक्नोति नान्यतः। तच्च वह्न्याभासादि यतोनुमातुः परोक्षं ततोऽधिपतिप्रत्यय इत्युच्यते। तच्च नूतनं नतु धूमजधूमतुल्यं तच्च तस्य वह्न्याभासादेर्नियतिशक्त्यपेक्षया अव्यभिचारिकार्यरूपं लिङ्गमिति तदनुमितौ व्याप्रियते एव वह्न्याभाससामान्यांशे तैः प्रमातृभिः सहैक्येन भगवता सृष्टोनुमातोच्यते, इति हि परमार्थः। परस्तु नूतनादन्यो यो धूमाभासादिः स धूमाभासादेव प्रमात्रन्तरगतादनुमात्रपेक्षया परोक्षत्वेनाधिपतिप्रत्ययरूपादुत्पन्न इति तस्यैव स्वकारणस्यानुमानाय स कार्यलिङ्गं भवेत् नतु कारणभूतस्य वह्न्याभासादेरिति सर्वं स्वस्थमिति सूत्रार्थः।

परोक्षादप्यधिपते-
धूमाभासादि नूतनम् ॥ १२ ॥
कार्यमव्यभिचार्यस्य
लिङ्गम्

एकवारं तावत्[१०१] महानसे प्रत्यक्षानुपलम्भ-बलेनाग्न्याभासधूमाभासयोः कार्यकारणभावो गृहीतः। तत्र विज्ञानवादिनो[१०२] दर्शने प्रति-सन्तानमन्यश्चान्यश्चाभासः,—इति स्वाभास[१०३]-योरेव कार्यकारणता गृहीता न तु सन्ताना-न्तरगतयोस्तदीयवृत्तान्तस्यासंवेदनात्[१०४]; तत-श्चेदानीमनुमानं न भवेत् स्वसन्तानगतात् धूमाभासात् क्रिमिसर्वज्ञादिप्रमातृसन्ताना-

---

१०१ इह तावदिति तथाचाहुः तत्पूर्वकं त्रिविधमनुमानमिति न वक्तव्यम् आगमाद्यपूर्वकाण्यपि अनुमानानीति । तेषामपि मूलभूतं प्रत्यक्षमेव कारणं यथोक्तम् ।

यत्राप्यनुमिताल्लिङ्गाल्लिङ्गिनि ग्रहणं भवेत् ।
तत्रापि मौलिकं लिङ्गं प्रत्यक्षादेव गम्यते ॥

इति ।

१०२ प्रतिसंतानं भिन्नमाभासमिच्छतः ।

१०३ स्वगतयोरेव धूमाग्न्याभासयोः ।

१०४ संतानान्तरगताभासवृत्तान्तस्य । ततश्चेति धूमाभास एव तावत् कुतः ततश्चाग्न्याभासानुमानमित्यर्थः ।

न्तरनिष्ठस्याग्न्याभासस्य, —इति निश्चयः । इह[१०५] तु दर्शने व्याप्तिग्रहणावस्थायां[१०६] यावन्तस्तद्देशसंभाव्यमानसद्भावाः प्रमातारस्तावतामेकोऽसौ धूमाभासश्च वह्न्याभासश्च[१०७] बाह्यनये इव, तावति तेषां परमेश्वरेणैक्यं निर्मितम्, —इति हि उक्तम् । ततः स्वपरसन्तानविशेषत्यागेन[१०८] धूमाभासमात्रं वह्न्याभासमात्रस्य कार्यम्, —इति व्याप्तौ गृहीतायां,[१०९] भूयोऽपि पर्वते यो धूमाभासः सोऽपि वह्न्याभासादेव, —इति व्याप्तिं स्मृत्वानुमिमीते 'अत्र पर्वते अग्न्याभास' इति । तावति धूमाभासविशेषे प्रमात्रन्तरैः सहैकीभूय वह्न्याभाससामान्यांशे परोक्षरूपांशसहिते विशेषाभासान्तरविविक्ते प्रमात्रन्तरैः साकमेकीभवति, —इति यावत् ।

---

१०५ अस्मद्दर्शने ।

१०६ व्याप्तीति संनिकृष्टदेशवर्तिन्याम् ।

१०७ तावत्प्रमातृभेदवर्ती धूमाभास एक एव अग्न्याभासश्च । एतच्च सर्वप्रमातृसाधारणमेकमाभासमिच्छतां सौगतानां घटते इत्याशयशेषः । बाह्येति नैयायिकमते ।

१०८ प्रमातृभेदत्यागेन ।

१०९ प्रत्यक्षानुपलम्भबलेन धूमाभासोऽग्न्याभासाज्जायते इति व्याप्तिरेकवारं शक्या ग्रहीतुम् ।

'भूय' इति व्याप्तिं गृहीत्वा पुनरपि यो धूमाभास आदिग्रहणादङ्कुराभासादिर्गृह्यते सोऽप्याभासो नूतनोऽपूर्वो न तु धूमजधूमवदप्रत्यग्रः । स च [110] अधिपतेरसंचेत्यमानात् वह्न्याभासात् बीजाभासादेव वा भवेत्, तत एव जनितुं शक्नोति नान्यतः । शक्ति लिङ् । स चाभासस्तेषु तेषु प्रमातृष्वेक [111] एव, अनेकत्वे न तु युज्यते एवैतदित्याशयः । यतश्च स एकोऽधिपतिश्च वह्न्याभासो धूमकारणं, ततो धूमाभासोऽस्यैवाग्न्याभासस्याव्यभिचरितं कार्यं लिङ्गं योगिकृतत्वाभावे निश्चिते सति,— इति तस्मात् कार्यात् सोऽनुमीयते यतः परोक्षोऽसावधिपतित्वादेव ॥ १२ ॥

[112] नन्वेवं गोपालघटिकान्तरालचिरोषितानिर्गतादपि धूमाभासात् स्यात् वह्न्याभासानुमानम्,— इत्याशङ्क्याह

११० तच्च वह्न्याभासादि यतोऽनुमातुः परोक्षं ततोऽधिपतिप्रत्यक्ष इत्युच्यते इत्यर्थः ।

१११ अन्वयव्यतिरेकपर्यायेणानियतेषु तेषु क्रिमिसर्वज्ञपर्यन्तेषु । नतु संतानभेदेन भिन्नः ।

११२ तदेवमाभासानन्तर्येण यदनन्तरं यस्योपलम्भः तत्तस्य कारणमिति कार्येण कारणोपलब्धिदोषमुद्भावयति नन्वेवमित्यादि ।

अन्यप्रमातृगात् ।
तदाभासस्तदाभासा-
देव त्वधिपतेः परः ॥ १३ ॥

परो नूतनादन्यो यो धूमाभासः स धूमाभासादेव प्रमात्रन्तरवर्तिनोऽधिपतिरूपात् परोक्षात्,–इति तथाभूतात् धूमाभासात् कथमकारणभूतो वह्न्याभासोऽनुमीयताम्? इत्यभिप्रायशेषः । कुशलाश्च लक्षयन्त्येव विवेकम्, अस्यार्थस्य[113] आनुमानिकबहुतरव्यवहारोपयोगिनो यत्नेन व्युत्पत्तिः कार्या,–इत्याशयेन नूतनमिति यदेव सूचितं तदेव व्यवच्छेद्यद्वारेण स्फुटीकृतम् ॥ १३ ॥

ननु चैवं धूमाभासो वह्न्याभासात्,–इत्यङ्गीकृतं चेत् तर्हि चेतनस्यैव कर्तृत्वम्,–इति यदुक्तं तत् कथं? तथाहि 'बीजे सत्यङ्कुरो भवति' इति यदेतत् दृष्टं धूमाग्निवदेव[114] तत् कथमनादरास्पदम्? इत्याशङ्क्याह

११३ कार्यकारणरूपस्य ।

११४ तदन्यस्यापि बीजादेर्हेतुता नैव युज्यते इत्यत्र ।

अस्मिन् सतीदमस्तीति
कार्यकारणतापि या ।
साप्यपेक्षाविहीनानां
जडानां नोपपद्यते ॥ १४ ॥

एक एव भावस्तावत् न कार्यकारणभावः, भावद्वयमपि च न युगपद्भावि कार्यकारणरूपं घटपटवत्, क्रमभाव्यपि नानियतक्रमकं नीलपीतादिज्ञानवत्, नियतक्रमिकत्वेऽपि न पूर्वभावि कार्यमुत्तरकालभावि च कारणम्,— इत्येवं नियतपूर्वभावं कारणं नियतपरभावं च कार्यम्,— इति परस्य[115] तावन्मतम्। तत्र स्वरूपादनधिका चेत् पूर्वता परता च तत् भावद्वयमात्रं, स च स च,— इति चार्थोऽपि वा न कश्चित् तस्याप्यपेक्षारूपत्वात् स स इत्येव हि स्यात्। अथ पूर्वता नाम प्रयोजकसत्ताकत्वं परता च प्रयोज्यसत्ताकत्वं तर्हि बीजस्याङ्कुरप्रयोक्त्री सत्ता अङ्कुरविश्रान्ता अङ्कुरान्तर्भावमात्मन्यानयति, अङ्कुराभावे प्रयो-

---

११५ सौगतस्य ।

कृत्वमात्रं स्यात् तदपि न किंचित् अन्यापेक्षत्वात् तस्य[११६]। एवं प्रयोज्यसत्ताकेऽपि वक्तव्यम्,—न केवलं भावमात्रमेव कार्यकारणता इत्यादयः पक्षा नोपपन्ना यावत् 'अस्मिन् सति' [११७]इति भूतविभक्त्या सप्तम्या प्रयोजकसत्ताकत्वम्, 'इदमस्ति' इति भाव्यमानविभक्त्या प्रयोज्यसत्ताकत्वम्,—इत्येवंरूपापि या कार्यकारणता सापि नोपपद्यते प्रमाणेन न संभवति [११८]जडानाम्, अन्योन्यापेक्षा हि अत्र जीवितं सा च जडानां न संभवति ॥ १४ ॥

कथम्? इति चेत् उच्यते

[११९]न हि स्वात्मैकनिष्ठाना-

मनुसन्धानवर्जिनाम् ।

---

११६ प्रयोक्तृत्वमात्रस्य ।

११७ यस्य च भावेन भावलक्षणमिति सूत्रनिर्दिष्टा हि सप्तमी विशेषणमाक्षिपति अघटेपि सति यः पटो भवति स घटसंनिधौ विलोक्यमानोपि पटोपि नैवं व्यपदिश्यते घटे सति भवतीति सप्तम्यर्थाक्षेपः ।

११८ जडत्वान्नापेक्षा तदभावान्न नियमः तदभावान्नियमविशिष्टं न पौर्वापर्यं कार्यकारणभाव इति व्यापकविरुद्धोपलब्धिव्यापकानुपलब्धयः, परस्य यः परत्र नियमः स न स्वभावभूतः स्वनिष्ठत्वात् सर्वभावानां ततोऽनुसंधानरूपापेक्षा तस्य व्यापिका सा च जडेषु नास्तीति ।

११९ प्रतिज्ञामात्रं पूर्वसूत्रेण कृतं हेतुविषयमपेक्षाविहीनानामिति,

**सदसत्तापदेऽप्येष**
**सप्तम्यर्थः प्रकल्प्यते ॥१५॥**

जडाः किलान्योन्यरूपमनुसन्धातुमप्रभविष्णवः, अन्योन्यानुसंधानरूपत्वं जडविरुद्धेन चैतन्येन व्याप्तम्, अनुसंधानं चापेक्षा चैतन्यस्वरूपमेव, अन्यत्र[120] तु सोपचरिता; अतोऽनुसन्धानविहीनत्वाज्जडो भावः स्वात्ममात्रविश्रान्तिसन्तोषसंकुचितशरीरः कथं परत्र प्रसरेत्। ततश्च यदि बीजं सदङ्कुरोऽसन् अथापि विपर्यय[121] उभयमपि वा सत् यदि वासत्, अथापि एकं सोपाख्यम्[122] अन्यत् निरुपाख्यम्, द्वयमपि वा सोपाख्यं निरुपाख्यं वा, तथापि प्रातिपदिकार्थ[123]मात्रं धर्मान्तरेण समु-

---

तत्साधनाय हेतुस्तु सूत्रान्तरेणाभिधीयते नहीति। अत्र प्रथमपादेनान्योन्यलग्नतात्मिकापेक्षा निवारिता द्वितीयेन तु अभिप्रायकृता कार्यकारणयोरुभयोरन्यतरस्य सत्तायामसत्तायां चेति पक्षचतुष्टयेपि संभाव्यमाने जडानामपेक्षा न युक्तेति दर्शितम्।

१२० अन्यत्रेति घटादौ।

१२१ अङ्कुरः सन् बीजमसत्।

१२२ प्रत्यक्षज्ञेयं व्यपदेश्यं वा निर्वचनीयम्। निरुपाख्यमिति परोक्षज्ञेयमव्यपदेश्यं वा।

१२३ नियतोपस्थितिकः प्रातिपदिकार्थः।

च्चयादिनाप्यनालिङ्गितमवतिष्ठते, तस्य समस्तस्यापेक्षारूपत्वेन चैतन्यविश्रान्तत्वात् ॥१५॥

[१२४] यस्मादचेतनेषु नापेक्षोपपद्यते

[१२५] अत एव विभक्त्यर्थः
प्रमात्रेकसमाश्रयः ।
क्रियाकारकभावाख्यो
युक्तो भावसमन्वयः ॥ १६ ॥

सप्तमीरूपाया विभक्तेरन्यस्या [१२६] अपि वा योऽर्थः क्रियाकारकभावलक्षणः स एव तावद्भावानां समन्वयो [१२७] नान्यः शुष्कः कश्चित् । स च यदि स्वतन्त्रे चिद्रूपे भावद्वयं विश्राम्यति तदोपपद्यते, अन्यथा तु न कथंचित् । तथा हि विकल्पेनापि [१२८] असौ व्यवहि-

१२४ तदेवं सौगतदृशि कार्यकारणभावो नोपपन्न इत्युपपाद्य स्वदर्शने तमुपपादयति आशङ्कापूर्वं यस्मादित्यादिना ।

१२५ यतो जडानां नापेक्षा ।

१२६ बीजादङ्कुरो बीजेनाङ्कुरोऽङ्कुरस्य बीजमित्यादिकायाः ।

१२७ क्रियाकारकभावव्यतिरिक्तः ततश्चोभयमेलनात्मकरसशून्य इत्यर्थात्पर्यवसितम् ।

१२८ समन्वयः क्रियाकारकभावलक्षणः ।

यमाणो न वस्तुनिष्ठतयोपपद्यते, वस्त्वनुसरणप्राणो हि विकल्पोऽनुभवानुसारितयैव भवति, सा[129] चेह नास्ति वस्तुप्रभवत्वेन, वस्त्वनुसारी हि अनुभवो, वस्तु च स्वात्मनिष्ठम्,—इत्युक्तम् । तस्मात् बीजे सति अङ्कुरो, वह्नौ सति धूमः,—इति च स्वतन्त्रचिद्रूपप्रमातृविश्रान्तत्वे सर्वमेतद्युज्यते नान्यथा, इति ॥ १६ ॥

ननु प्रयोज्यप्रयोजकसत्ताकत्वलक्षणापेक्षा यदि स्वात्मैक[130]निष्ठत्वे नोपपद्यते, तर्हि कार्यकारणयोस्तादात्म्यवादिनां सांख्यानां[131] मते

१२९ अनुभवानुसारिता ।

१३० बीजाङ्कुरादीनाम् ।

१३१ तथा च सांख्यवृद्धाः सतः सज्जायते इति तस्मात्कारणव्यापारात् प्रागपि सत् कार्यमिति सिद्धं तथा चेश्वरकृष्णः ।

असदकरणादुपादानग्रहणात् सर्वसंभवाभावात् ।
शक्तस्य शक्यकरणात् कारणभावाच्च सत्कार्यम् ॥

इति । असदकरणात् असच्चेत् कारणव्यापारात् पूर्वं कार्यं नास्य सत्त्वं केनापि कर्तुं शक्यं, सतश्चाभिव्यक्तिरवशिष्यत एव पीडनेन तिलेषु तैलस्य । उपादानग्रहणात् कार्येण संबद्धं कारणं कार्यस्य जनकं । संबन्धश्च कारणैः कार्यस्यासतो न संभवति । असंबद्धजन्यत्वे बाधकमाह सर्वसंभवाभावात् इति तथात्वे सर्वस्मात्सर्वं संभवेत् तस्मात् संबद्धं संबद्धेन जन्यते । तदुक्तम्

सा संभवत्येव, तत् किं चैतन्यविजृम्भात्मक-
कर्तृवादसमर्थनेन? इत्याशङ्क्याह

परस्परस्वभावत्वे
कार्यकारणयोरपि ।
एकत्वमेव भेदे हि
नैवान्योन्यस्वरूपता ॥ १७ ॥

यदि बीजस्याङ्कुरः स्वभावस्तर्हि अङ्कुर एव न बीजं स्यात् किंचित् विपर्ययो[१३२] वा स्यात्,— इति किं कारणं किं वा कार्यम्; अथ अन्यद्बीजमङ्कुरोऽन्यः, तर्हि न परस्परात्मकत्वं, भेदाभेदौ हि एकदैकविषयौ विरुद्धावेव ॥१७॥

---

असत्त्वान्नास्ति संबन्धः कारणैः सत्त्वसङ्गिभिः ।
असंबद्धस्य चोत्पत्तिमिच्छतो न व्यवस्थितिः ॥

इति । शक्तमेव जन्यतेऽतो न सर्वसंभव इति चेदाह शक्तस्येति । शक्तिर्हि कार्यदर्शनादवगम्यते शक्तिः सर्वत्र चेदव्यवस्था, शक्ये चेत् कथं तस्मिन्नसति सेत्यर्थः । अन्यदपीत्याह कारणभावादिति कार्यस्य कारणात्मकत्वादित्यर्थः । तदुक्तम्

निरात्मकत्वात् सर्वेषामसतामविशिष्टता ।
विशेषणं च भिन्नं ते सत्त्वमभ्युपगम्यताम् ॥

इति । तादात्म्येति परस्परात्मकत्ववादिनाम् ।

१३२ बीजमेव स्यादङ्कुरो हि न किंचित् स्यादिति विपर्ययः ।

नन्वेवमपि[१३३] बीजमङ्कुरादिविचित्रमवभातं दीर्घदीर्घपरामर्शशालिभिः स्रोतोवदविच्छिन्नस्वरूपमेव निर्बाधं प्रत्यवमृश्यते । तथा च क्व गतं बीजम्,—इति प्रश्ने वक्तारो भवन्ति, न कुत्रचित् गतमङ्कुरात्मना वर्तते, अङ्कुरीभूतमयमङ्कुरस्तत्,—इत्येवं प्रधानं महदादिधरान्तीभूतं यावद्वितितीभूतमनन्तसर्गप्रलयपरम्परात्मतां प्राप्तम्,—इति विततग्राहिणी प्रतीतिः; भागाभिनिवेशवशात्[१३४] तु कार्यकारणतापरिकल्पनं तस्यैव भावस्य विशसनप्रायम्[१३५],—इत्याशङ्क्याह

एकात्मनो विभेदश्च
क्रिया कालक्रमानुगा ।
तथा स्यात्कर्तृतैवैवं
तथापरिणमत्तया ॥ १८ ॥

---

[illegible] कमेव क्रमविचित्रस्वभावं वस्त्वित्यर्थः ।

[illegible] स्वभाववर्गस्य मध्ये यः पूर्वः स्वभावः कारणमुत्तरः [illegible]

[illegible] प्रायम् ।

इह दीर्घदर्शिना[१३६] प्रत्यक्षानुमानागमान्यतमप्रमाणमूलां प्रत्यभिज्ञामाश्रित्य तदेवेदं सुखदुःखमोहसाम्यमनन्तप्रकारवैषम्यावलम्बनेन विश्वीभूतम्,—इति समर्थ्यते। तत्र प्रत्यभिज्ञानबलेन यदेकात्मकमेकस्वभावं तस्य यो भेदोऽन्यान्यरूपता इयमेव सा क्रियोच्यते[१३७], यतः काललक्षणेन क्रमेणानुगता, ते हि अन्यान्यस्वभावा युगपत् न भान्ति, पूर्वापरीभूतरूपतैव च क्रियोच्यते; यत एवं क्रिया 'तथा' इति तेन प्रकारेण प्रधानादेः क्रियाविशेषलक्षणेन कर्तृतैव स्यात्, नतु शुष्कं कारणतामात्रं, यतो हेतोः 'तथा'[१३८] इति तेन तेन महदादिप्रकारेण सततमेव क्रमिकां तथाभासनरूपां परिणामलक्षणां क्रियामाविशतः परिणमत्ता किंचिद्रूपं परिवर्ज्य त्यक्त्वा व्यावर्त्यमनुवर्तयितव्यं च व्यवस्थाप्य निवर्त्य-

१३६ कपिलेन।

१३७ परिणामलक्षणा।

१३८ प्रधानादेः।

मानतृतीयरूपप्रह्वता प्रधानादेस्तया हेतुभूतया ॥ १८ ॥

ननु प्रधानं परिणामक्रियायां कर्तृरूपमियता समर्थितम्,—इति को दोषो, न हि पुरुषवदस्य[139]कर्तृत्वमिष्यत? इत्याशङ्क्याह

न च युक्तं जडस्यैवं
भेदाभेदविरोधतः ।
आभासभेदादेकत्र
चिदात्मनि तु युज्यते ॥१९॥

एवमित्यभिन्नरूपस्य धर्मिणः सततप्रवहद्बहुतरधर्मभेदसंभेद[140]स्वातन्त्र्यलक्षणं परिणमनक्रियाकर्तृकत्वं यदुक्तं तत् प्रधानादेर्न युक्तं जडत्वात्, जडो हि नाम परिनिष्ठितस्वभावः प्रमेयपदपतितः स च [141]रूपभेदाद्भिन्नो व्यवस्थापनीयो नीलपीतादिवत्, एकस्वभाववत्त्वाच्चाभिन्नो नीलवत्, न तु स एव

१३९ प्रधानस्य ।

१४० भेदितेऽभेदनमभेदिते च भेदनमित्यर्थः ।

१४१ प्रमेयत्वात् तदसाविश्यपेक्षया भिन्न इव नील इवानीलापेक्षया ।

स्वभावो भिन्नश्चाभिन्नश्च भवितुमर्हति विधिनिषेधयोरेकत्रैकदा विरोधात्। कश्चित् स्वभावो भिन्नः कश्चित् त्वभिन्नः,—इति चेत्, द्वौ तर्हि इमौ स्वभावावेकस्य स्वभावस्य भवेताम्, न चैवं युक्तं

'भेदाभेदव्यवस्थैवमुच्छिन्ना सर्ववस्तुषु।'

इति न्यायात्। एवं जडस्य 'इदम्' इति परिनिष्ठिताभासतया सर्वतः परिच्छिन्नरूपत्वेन प्रमेयपदपतितस्य नायं स्वभावभेद एकत्वे सति[१४२] उपपद्यते। यत्तु प्रमेयदशापतितं न भवति किं तु चिद्रूपतया प्रकाशपरमार्थरूपं चिदेकस्वभावं स्वच्छं, तत्र भेदाभेदरूपतोपलभ्यते; अनुभवादेव हि स्वच्छस्यादर्शादेरखण्डितस्वस्वभावस्यैव पर्वतमतङ्गजादिरूपसहस्रसंभिन्नं वपुरुपपद्यते। न च रजतद्विचन्द्रादि यथा शुक्तिकैकचन्द्रस्वरूपतिरोधानेन वर्तते, तथा दर्पणे पर्वतादिः दर्पणस्य

१४२ अयं प्रयोगः—जडमनेकरूपं न भवति प्रमेयत्वात् नीलादिवत् अनेकविरुद्धमेकत्वं तेन व्याप्तं प्रमेयत्वं परिनिष्ठितरूपतया व्यवस्थापनीयत्वं प्रमेयत्वमिति विरुद्धव्याप्तोपलब्धिः।

हि तथावभासे दर्पणतैव सुतरामुन्मीलति 'निर्मलोऽयमुत्कृष्टोऽयं दर्पण' इत्यभिमानात्। न हि पर्वतो बाह्यस्तत्र संक्रामति स्वदेशत्यागप्रसङ्गादस्य, न चास्य पृष्ठेऽसौ भाति दर्पणानवभासप्रसङ्गात्, न च मध्ये निबिडकठिनसप्रतिघस्वभावस्य तत्रानुप्रवेशसंभावनाभावात्, न पश्चात् तत्रादर्शनात् दूरतयैव च भासनात्, न च तन्निपतनोत्फलितप्रत्यावृत्ताश्चाक्षुषा मयूखाः पर्वतमेव गृह्णन्ति, बिम्बप्रतिबिम्बयोरुभयोरपि पर्वतपार्श्वगतदर्पणावभासेऽवलोकनात्। तस्मात् निर्मलतामाहात्म्यमेतत् यदनन्तावभाससंभेदश्चैकता च। गिरिशिखरोपरिवर्तिनश्चैकत्रैव बोधे नगरगतपदार्थसहस्राभासः,—इति चिद्रूपस्यैव कर्तृत्वमुपपन्नम्, अभिन्नस्य भेदावेशसहिष्णुत्वेन क्रियाशक्त्यावेशसंभवात्॥ १९॥

नन्वेतावता विज्ञानमेव ब्रह्मरूपमिमां विश्वरूपतावैचित्रीं परिगृह्णातु किमीश्वरतापरिकल्पनया? इत्याशङ्क्याह

वास्तवेऽपि चिदेकत्वे
न स्यादाभासभिन्नयोः ।
चिकीर्षालक्षणैकत्व-
परामर्शं विना क्रिया ॥२०॥

चिद्रूपस्यैकत्वं यदि वास्तवं[१४३] भेदः पुनरयमविद्योपप्लवात्,—इत्युच्यते कस्यायमविद्योपप्लवः,—इति न संगच्छते । ब्रह्मणो हि विद्यैकरूपस्य कथमविद्यारूपता, न चान्यः कश्चिदस्ति वस्तुतो[१४४] जीवादिर्यस्याविद्या भवेत् । अनिर्वाच्येयमविद्या,—इति चेत्, कस्य अनिर्वाच्या,—इति न विद्मः; स्वरूपेण च भाति, न चानिर्वाच्या,—इति किमेतत्[१४५] ?; युक्त्या नोपपद्यते,—इति चेत् संवेदनतिरस्कारिणी का खलु युक्तिर्नाम अनुपपत्तिश्च भासमानस्य कान्या[१४६] भविष्यति । सद्रूपमेव ब्रह्माभिन्नं च-

---

१४३ वास्तवं स्वभावसिद्धं जडस्य घटस्य घटत्वं यथा तथा चितो यद्येकत्वं स्वभावसिद्धम् ।

१४४ चिदेकत्वस्य वास्तवत्वात् । यतोऽविद्ययैव स जीवादिरुत्थाप्यः

१४५ किमेतदिति निपातसमुदायो यक्षभाषायां वर्तते ।

१४६ येनोक्तं युक्त्या नोपपद्यते इति ।

कास्त्यविकल्पेन, विकल्पबलात्तु भेदोऽयम्,—इति चेत्, कस्यायं विकल्पनव्यापारो नाम? ब्रह्मणश्चेत् अविद्यायोगो न च अन्यो[147]ऽस्ति; अविकल्पकं च सत्यं विकल्पकमसत्यम्,—इति कुतो विभागो भासमानत्वस्याविशेषात्। भासमानोऽपि भेदो बाधितः,—इति चेत्, अभेदोऽपि एवं[148] भेदभासनेन तस्य बाधात्। विपरीतसंवेदनोदय एव हि बाधो नान्यः कश्चित्[149]। बाधोऽपि च भासमानत्वादेव सन् नान्यतः,—इति भेदोऽपि भासमानः कथमविद्या। भासनमवधीर्य आगमैकप्रमाणकोऽयमभेदः,—इति चेत् आगमोऽपि भेदात्मक एवावस्तुभूतः प्रमातृप्रमाणप्रमेयविभागश्च,—इति न किंचिदेतत्[150]। तस्मात् वास्तवं चिदेकत्वमभ्युपगम्यापि तस्य कर्तृत्वलक्षणाभिन्न-

---

१४७ जीवादिः।

१४८ एवमिति बाधितः। प्रतीतिनिरूढिस्तु भेदे यथा तथा नाभेदे इति भेदस्यैव सत्यता युक्ता।

१४९ बाधोऽप्ययं भेद एवेति कथमविद्या न सोस्ति तदिदं शशशृङ्ग गगनकुसुमच्छेदकमुक्तं स्यात्।

१५० सर्वमालजालमित्यर्थः।

रूपसमावेशात्मिका क्रिया नोपपद्यते; परामर्शलक्षणं तु स्वातन्त्र्यं यदि भवति तदोपपद्यते सर्वम्। परामर्शो हि चिकीर्षारूपेच्छा, तस्यां च सर्वमन्तर्भूतं निर्मातव्यमभेदकल्पेनास्ते,—इत्युक्तं

'स्वामिनश्चात्मसंस्थस्य ···· ।' (१।५।१०)

इत्यत्र। तेन स्वात्मरूपमेव विश्वं सत्यरूपं प्रकाशात्मतापरमार्थमत्रुटितप्रकाशाभेदमेव सत् प्रकाशपरमार्थेनैव भेदेन प्रकाशयति महेश्वरः,—इति तदेवास्यातिदुर्घटकारित्वलक्षणं स्वातन्त्र्यमैश्वर्यमुच्यते। आभासभिन्नयोरिति क्रियापेक्षा[१५१] संबन्धसामान्ये षष्ठी, पश्चाद्यथोचितं विभज्यते[१५२]। आभासेन भिन्नौ जडाजडाभासौ, जडो घटादिः कर्मरूपश्चिदाभासः कर्तृरूपः,—इति तयोः क्रिया, एकस्य क्रियमाणत्वमपरस्य कर्तृत्वं न भवेत्। चिकीर्षारूपेण निर्मातव्यभाववर्गाभेदपरामर्शात्मना

---

१५१ चिकीर्षापेक्षा वेति।

१५२ कर्तृकर्मभ्याम्।

विना[153], एका चासौ क्रिया कथं भिन्नयोः स्वभावभूता भवेत् । कार्यकारणताप्रस्तावात् कर्तृकर्मणी उक्ते, कारकान्तराण्यपि तु एककर्तृत्वानुप्रवेशीनि परमार्थतोऽन्यथा करणादौ भिन्ने कारकव्राते कथमभिन्ना सा[154] । यदि वा आभासेन यौ भिन्नौ जडचेतनौ तयोर्या चिकीर्षा एकस्यैष्यमाणतापरस्यैषितृता तत्स्वभावमेकत्वपरामर्शं विना, — इति । यद्वा आभासभिन्नयोः 'अहमिदम्' इति यः परामर्श एकविश्रान्तिरूपश्चिकीर्षात्मा[155] तं विना, — इति । आभासभिन्नयोरेकपरामर्शं विना चिकीर्षालक्षणा कथं क्रिया, — इति वा । एवं क्रियां वा चिकीर्षां वा परामर्शं वा अपेक्ष्य षष्ठी नित्यसापेक्षत्वाच्च समासः ॥ २० ॥

---

१५३ आभासेन भिन्नयोरिदमहमिति जडचेतनयोर्य एकः परामर्शः परचित्तत्वविश्रान्तिलक्षणस्तं विनेत्यर्थः ।

१५४ कार्यकारणता ।

१५५ परचित्तत्वविश्रान्तिः ।

एतत् उपसंहरति

इत्थं तथा घटपटा-
द्याभासजगदात्मना।
तिष्ठासोरेवमिच्छैव
हेतुता कर्तृता क्रिया ॥ २१ ॥

यतो न जडस्य कारणता न कर्तृता, तथानीश्वरस्य चेतनस्यापि, — इत्यनेनैव हेतुप्रकारेणेदं जातं, — य एव तथाचिकीर्षुस्तस्यैव सा चिकीर्षा बहिष्पर्यन्ततां प्राप्ता 'क्रिया' इत्यभिधीयते, सैव च कर्तृता तदेव हेतुत्वं नान्यत् किंचित्। तेन 'घटस्तिष्ठति' इत्ययमर्थः — घटात्मना तिष्ठासुः स्वातन्त्र्यात् स्थानमभ्युपगच्छन् न तु तद्रूपमसहमानो यो महेश्वरः प्रकाशः स तिष्ठति — इति। घटपटाद्याभासरूपं यत्किल जगत् तदात्मना यः 'तथा' इति तेन तेन तज्जगद्गतजन्मस्थित्यादिभावविकारतद्भेदक्रियासहस्ररूपेण यः

पं० १३ ग० पु० गच्छन्नतद्रूपमिति पाठः।

स्थातुमिच्छुः स्वतन्त्रः, तस्य या एवमिति विचित्ररूपेच्छा सैव क्रिया, — इति संबन्धः। तेन महेश्वर एव भगवान् विश्वकर्ता, — इति शिवम् ॥ २१ ॥

इति श्रीमदाचार्योत्पलदेवपादविरचितायामीश्वरप्रत्यभिज्ञायां
श्रीमदाचार्याभिनवगुप्तकृतविमर्शिन्याख्यटीकोपेतायां
क्रियाधिकारे कार्यकारणतत्त्वनिरूपणं नाम
चतुर्थमाह्निकम् ॥ ४ ॥

संपूर्णश्चायं क्रियाधिकारो नाम द्वितीयो विमर्शः ॥ २ ॥

---

श्रीमत्प्रतापभूभर्तुराज्ञया प्रीतये सताम्।
मधुसूदनकौलेन संपाद्यायं प्रकाशितः॥

---

अथ

# ईश्वरप्रत्यभिज्ञायां

श्रीमदाचार्योत्पलदेवविरचितायां

आचार्याभिनवगुप्तविरचितविमर्शिन्याख्य-
टीकोपेतायाम्

## आगमाधिकारे

## प्रथममाह्निकम् ।

यं प्राप्य सर्वागमसिन्धुसङ्घः
पूर्णत्वमभ्येति कृतार्थतां च ।
तं नौम्यहं शांभवतत्त्वचिन्ता-
रत्नौघसारं परमागमाब्धिम् ॥

१ यथा हि सिन्धूनां सिन्धोरेवोत्पत्तिः, भागकल्पनया अन्यत्रापि चोपयोगं यान्ति, तत्रैव च पश्चाद्विश्रान्तिः, तद्वलैव कृतार्थता अन्यथा विशीर्णप्रायत्वं, तथा परमागमाब्धेरन्यागमा उद्गता मध्ये कुत्रापि कुत्रापि चोपयोगं यान्ति भागकल्पनया तत्रैव विश्रान्त्या पूर्णत्वं कृतार्थता च, अन्यथा विशीर्णप्रायत्वं भागव्याहृत्यापूर्णत्वं स्वयं तथेत्यर्थः ।

श्रीमत्सदाशिवोदारप्रारम्भं वसुधान्तकम् ।
यदन्तर्[2]भाति तत्त्वानां चक्रं तं संस्तुमः शिवम् ॥

एवमधिकारद्वयेन ज्ञानक्रियास्वरूपं वितत्य निर्णीतम्, अथेदं वक्तव्यं क्रिया नाम विश्वपदार्थावभासनलक्षणा, — इत्युक्तं[3] समनन्तरमेव, के च ते विश्वे पदार्थाः,—इति । तत्राभासरूपा एव जडचेतनलक्षणाः पदार्थास्ते च कियता रूपेण संगृह्यन्ते, नहि प्रत्यक्षं मायाप्रमातुः सर्वत्र क्रमते, अनुमानमप्येवं, नहि यद्यदस्ति तत्र तत्र लिङ्गव्याप्त्यादिग्रहणसंभवः । आगमस्त्वपरिच्छिन्नप्रकाशात्मकमाहेश्वरविमर्शपरमार्थः किं न पश्येत्, — इति तदनुसारेण पदार्थनिर्णयं

२ महासामान्यनयेनान्तरुद्गीर्णसमस्ततत्त्वव्रातप्रकृतिर्हि शिवस्तत्रैव भागरूढौ विशेषकलना सदाशिवादितत्त्वव्यपदेशः, नहि सामान्यमननुसृत्य विशेषकलना संभवतीति चोक्तं यदन्तरिति । तथा चोक्तम् ।

'यान्युक्तानि पुराण्यमूनि विविधैर्भेदैर्यदेष्वन्वितं
रूपं भाति परप्रकाशनिबिडं देवः स एकः शिवः ।
तत्स्वातन्त्र्यवशात्पुनः शिवपदाद्भेदे विभाते परं
यद्रूपं बहुधानुगामि तदिदं तत्त्वं विभोः शासने ॥'

इति ।

३ विश्ववैचित्र्यचित्रस्येत्यादौ सर्वपदार्थावभासनिर्माणलक्षणत्वमेव क्रियाशक्तेः स्वरूपमित्यर्थः ।

वि[४]श्वप्रमेयीकरणप्रति[५]लब्धतद्विश्वोत्तीर्णप्रमातृपदहृदयङ्गमीकरणाभिप्रायेण निरूपयितुमाचार्य आग[६]माधिकारं तृतीयमारभते । तत्र श्लोकैकादशकेन 'एवमन्तर्बहिर्वृत्तिः' इत्यादिना 'स्थूलसूक्ष्मत्वभेदतः' इत्यन्तेनागमसिद्धं शिवादिधरणीप्रान्तमेकैकाभासरूपतात्मकं दर्शनान्तरे 'सामान्यम्' इति यद्व्यवहृतं, यस्य सामानाधिकरण्ययोगादनन्तस्वलक्षणावभासनव्यूहविशेषपूर्वकः समस्तोऽयं शरीरभुवनादिविभवः, तं परमेश्वरागमसिद्धं

४ ननु प्रकृतं हि स्वरूपप्रत्यभिज्ञानं तदेव कथनीयं न च विश्वप्रमेयतापादनमत्रोपयोगीत्यत आह विश्वेति विश्वप्रमेयीकरणे हि तावत्प्रमेयपदोत्तीर्णा तावदन्तःकरणप्रतिलब्धपूर्णभावा सत्यप्रमातृता हृदयङ्गमीकृता भवेत् । यदुक्तं स्पन्दसूत्रेषु

दिदृक्षयेव सर्वार्थान्यदा व्याप्यावतिष्ठते ।
तदा किं बहुनोक्तेन स्वयमेवावभोत्स्यते ॥

इति । एतच्च समस्तसंपदिति पदेन बहुव्रीहिपक्षे स्फुटीकृतम् । समस्तस्य हि मूर्तिक्रियात्मनो देशकालप्रपञ्चस्य संविदवभासने तदपरिच्छिन्नस्वभावा असौ विभुनित्यरूपा सर्वशक्तिः स्वप्रकाशतैव निर्भासते इति भावः ।

५ विशेषोत्पुंसनेन विश्वोत्तीर्णं सामान्यात्मकं भवति लब्धम् ।

६ तदुक्तम् ।

'प्रमाणमेकं तद्वाक्यं तथ्यमीश्वरभाषितम् ।
तस्योक्तिः पौरुषैः स्थूलैः प्रमाणैर्न प्रबाध्यते ॥'

इति ।

युक्त्याप्यनुगतं प्रतीकतस्तत्त्वग्रामं दर्शयति,—इत्याह्निकतात्पर्यम् । तत्राधिकारसंगतिं योजयन् पूर्वपक्षप्रतिक्षेपं चोपसंहरन् शिवतत्त्वस्वरूपमेव दर्शयितुमाह

एवमन्तर्बहिर्वृत्तिः
क्रिया कालक्रमानुगा ।
मातुरेव तदन्योन्या-
वियुक्ते ज्ञानकर्मणी ॥ १ ॥

एवमिति, यतः परदर्शनोक्तः कार्यकार-

पं० १ ख० पु० प्रत्येकत इति पाठः ।

---

७ तदेव च सर्वमेतदेव च सर्वभावानां तत्त्वमिति तदेव तावत् ज्ञानक्रियायोगादाभासविमर्शसारमित्यर्थः ।

८ परप्रमातृरूपस्य परशिवस्यैव परप्रकाशपरमार्थस्य मातुः शिवस्य या औन्मुख्यरूपा इच्छैव क्रिया शुद्धविद्याविमर्शमयी सैव यदा स एव शिवो वेदनामात्राविशेषमपि विश्वं यदा स्वस्मिन्नेव स्वसान्निर्माणेन विसृजतीति तदा आन्तरभावोद्रेकेण ज्ञानशक्तिरूपे सदाशिवे स्थिता यदा तु बहिर्विसर्गप्रधानतया विसृजतीति तदा बहिर्भावोद्रेकेण क्रियाशक्तिरूपे चेश्वरे क्रियाशक्तिरूपा स्थिता । यदुक्तम्

'उत्तरोत्तरमवग्रहग्रहैः पश्यतोऽप्यधरमुत्तरस्य यः ।
साधनस्य निजभावनाग्रहो हेतुरत्र भवतो मरीचयः ॥'

इति । आगमेऽपि च

'तस्मिन्नेवैश्वरे तत्त्वे संस्थितः परमेश्वरः ।
शिवेच्छानुमताः सर्वे जगतः प्रभविष्णवः ॥'

इति ।

णभावो जड[९]रूपप्रतिष्ठो न कथंचिदुपपन्नः, किन्तु चिद्रू[१०]प एवान्तर्बहिरात्मना प्रकाशपरमार्थेनापि वपुषा तदाभा[११]सरूपेण वर्तमानः काल[१२]क्रममाक्षिपन् क्रियाभिधीयते तस्य प्रमातुरेव ज्ञानशक्तिवपुषो धर्मः; 'तत्' इति तस्मादवियुक्तं ज्ञा[१३]नं क्रिया च । ज्ञानं विम-

---

९ जडरूपप्रतिष्ठः परदर्शनोक्तः कार्यकारणभावो नोपपन्न इति संबन्धः ।

१० चिद्रूपः—प्रकाशविमर्शैकपरमार्थोऽपि ।

११ ज्ञानशक्तिवपुषा धर्मिरूपः ।

१२ कालक्रमं—क्रमिकावभासं ।

१३ सा हि शक्तिरन्तरवभासमानस्वभावतया ज्ञानशक्तिरुच्यते, बहिर्भावरूपेण क्रमोपबृंहितेन विमर्शदार्ढ्येन उपलक्षिता क्रियाशक्तिरिति उच्यते । यदागमोऽपि

'एवमेतदिति ज्ञेयं नान्यथेति सुनिश्चितम् ।
ज्ञापयन्ती जगत्यत्र ज्ञानशक्तिर्निगद्यते ॥
एवंभूतमिदं वस्तु भवत्विति यदा पुनः ।
जाता तदैव तत्तद्वत्कुर्वत्यत्र क्रियोच्यते ॥'

इति । भगवत एव परमशिवस्याक्रमत्वेऽपि युक्तो ज्ञानक्रियायोगः । ननु च मायीये सर्गे कालतत्त्वोन्मेषात् भवतु क्रमः, विद्यात्मके तु मायानुन्मेषात् कालयोगाभावे कथमसौ क्रमयोग उचितः, अत्रोक्तमेव सदाशिवावस्थायामपि चेदन्तोन्मेषस्याहन्ताच्छादनीयस्यापि संभवमुत्थापयन्तः प्रमातारोऽवश्यं संभाविनः अतश्च श्रीसोमानन्दपादा व्याचख्युः

'यदा तु तस्य चिद्धर्मप्रभवामोदजृम्भया ।
विचित्ररचना नानाकार्यसृष्टिप्रवर्तने ।
भवत्युन्मुखिता चित्ता सेच्छायाः प्रथमा तुटिः ॥'

इति परमेश्वरेऽपि भवतीत्यौन्मुख्यरूपाया आनन्दशक्तेरिच्छाशक्त्यपेक्षया प्रथमत्वं पूर्वभावित्वं तुटिरिति ।

र्शानुप्राणितं, विमर्श एव च क्रियेति । न च ज्ञानशक्तिविहीनस्य क्रियायोगः,—इति तदेतदवियुक्तज्ञानक्रिया[14]रूपं, क्रियाद्वारेण सकलतत्त्वराशिगतसृष्टिसंहारशतप्रतिबिम्बनसहिष्णु यत् तदुपदेशभावनादिषु तथाभासमाने[15]ऽमनाभासरूपमपि वस्तुतः, शिवतत्त्वम्,—इत्युक्तं भवति ॥ १ ॥

नन्वेवंभूतं शिवतत्त्वं चेत् तर्हि ततोऽनतिरिच्यमानमिदं विश्वम्,—इति किमन्यत् तत्त्वं स्यात् । एकचित्तत्त्वविश्रान्तौ च तत्त्वानां कथं क्रमो भवेत्, देशकालाभेदात्? एवमेवैतत्

किं[16]त्वान्तरदशोद्रेका-
त्सादाख्यं तत्त्वमादितः ।

---

१४ तदेव सर्वभावानां पारमार्थिकं वपुः ।

१५ अवभासमात्ररूपं तदुक्तं स्वातन्त्र्यामुक्तमिति ।

१६ विशेषतश्चात्र सदाशिवेश्वरौ कथं तत्त्वान्तरं भवेतां यतोऽत्र ।

'लयाधिकारभोगाख्यत्रितयोक्तिनिदर्शनात् ।
पदार्थः पतिनामासौ प्रथमः परिकीर्तितः ॥'

इत्यनेन हि पत्युरेवेश्वरतोक्ता, ततश्च ज्ञानक्रियावियोगेऽपि उक्तक्रमादन्यतरोद्रेकवशात् सादाख्यादिक्रमभेद इत्याह किंत्विति आन्तरदशाशब्दाभ्यां शिवतत्त्वाक्षेपः ।

बहिर्भावपरत्वे तु
परतः पारमेश्वरम् ॥ २ ॥

यद्यप्येकमेव शिवतत्त्वं तथापि[१७] तदीयमेव स्वातन्त्र्यं स्वात्मनि स्वरूपभेदं तावत्प्रतिबिम्बकल्पतया दर्शयति । स्वरूपवैचित्र्यमेव देशकालक्रमः, मूर्तिक्रियावैचित्र्यमयो हि असौ; ततश्चान्तरी[१८] ज्ञानरूपा या दशा तस्या उद्रेकाभासने 'सादाख्यं' सदाख्यायां भवम्; यतः प्रभृति[१९] सदिति प्रख्या, सदाख्यायाश्च सदाशिवशब्दरूपाया[२०] इदं वाच्यं तत्त्वम् । सृष्टिक्रमोपदेशादौ प्रथममुचितं तत्सादाख्यं तत्त्वम् । 'बहिर्भावस्य' क्रियाशक्तिमयस्य 'परत्वे' उद्रेकाभासे सति 'पारमेश्वरं' परमे-

---

१७ विशेषान्तरमपि अत्रास्तीति तदुच्यते तथापीति ।

१८ अन्तर्विपरिवर्तमानं ज्ञानमात्रं क्रियाव्यपदेशशून्यं यत् प्रतिपादितं स श्रीसदाशिवभट्टारकः बहिर्भावपरत्व इति क्रियाशक्तिमयस्य परत्वे उद्रेकावभासे सति पारमेश्वरमित्यर्थः ।

१९ प्रथमं हि शिवतायां सत्ता महासामान्यानुगतैव इति तत एवोद्रेकेण सत्ताव्यपदेशः ।

२० इदन्तोन्मेषेऽपि शिवता इति सदाशब्देनोक्तम् ।

श्वर[21]शब्दवाच्यमीश्वरतत्त्वं नाम । ततश्च सादाख्यस्य पश्चादुचितावभासनम् । एतदुक्तं भवति–इह तस्य भावस्तत्त्वम्,–इति भिन्नानां वर्गाणां[22] वर्गीकरणनिमित्तं यदेकमविभक्तं भाति तत्तत्त्वं[23], यथा गिरिवृक्षपुरप्रभृतीनां नदीसरःसागरादीनां च पृथिवीरूपत्वमब्रूपत्वं चेति । ततश्च शुद्धचैतन्यवर्गो यो मन्त्रमहेश्वराख्यः, तस्य प्रथमसृष्टावस्माकमन्तःकरणैकवेद्यमिव ध्यामलप्रायमुन्मीलितमात्र[24]चित्रकल्पं यद्भावचक्रं, संहारे च ध्वंसोन्मु[25]खतया तथाभूतमेव चकास्ति प्रतिबिम्बप्रा-

---

पं० १ ख० पु० तच्चेति पाठः ।

---

२१ भगवतोऽत्यन्तदुर्घटकारितापोषणौचित्यात् परमेश्वरशब्दवाच्यत्वम्।

२२ वर्गाणां विशेषरूपाणां वर्गीकरणनिमित्तम् एकीकरणनिमित्तं कतिपयकतिपयभेदानुगतं रूपं तत्त्वम् ।

२३ तदुक्तं मतङ्गसंहितायाम् ।

'तत्त्वं यद्वस्तुरूपं स्यात्स्वधर्मप्रकटात्मकम् ।
तत्त्वं वस्तुपदं व्यक्तं स्फुटमाम्नायदर्शने ॥
यदच्युतं स्वकाद्वृत्तात्ततं चात्मवशं गतम् ।
ततमन्येन नो तस्मात्तत्त्वं तत्त्वसंततौ ॥'

इति ।

२४ ध्यामलप्रायमस्फुटप्रायम् ।

२५ ध्वंसोन्मुखमिव । तथाभूतमेव उन्मीलितचित्रकल्पम् ।

यतया, तस्य चैतन्यवर्गस्य तादृशि भावराशौ तथाप्रथनं नाम यच्चिद्विशेषत्वं तत्सदाशिवतत्त्वम् । मन्त्रेश्वरादिरूपस्य[26] तु चैतन्यराशेः स्फुटीभूतमस्मद्बहिष्करणसरणिसंप्राप्तभाववर्गप्रातिमं विश्वं प्रतिबिम्बतया भाति, तस्य तु तत् तथाप्रथनमीश्वरतत्त्वम् । यस्तु सदाशिवभट्टारक ईश्वरभट्टारकश्च ध्येयोपास्यादिरूपतया स ब्रह्मविष्णुतुल्यः पृथगेव मन्तव्यो[27] न तु नामसारूप्याद्भ्रमितव्यम् । यदाहुरेके 'ब्रह्मविष्णुरुद्रा अपि तत्त्वमध्ये किं न गणिताः' इति ॥ २ ॥

नामधेयान्तरमप्यत्र तत्त्वद्वये दर्शयति

ईश्वरो बहिरुन्मेषो
निमेषोऽन्तः सदाशिवः ।

---

२६ तथा चागमः ।

'तस्मिन्नेवेश्वरे तत्त्वे संस्थितः परमेश्वरः ।
शिवेच्छानुमताः सर्वे जगतः प्रभविष्णवः ॥'

इति ।

२७ तादृश्यामवस्थायां सदाशिवेश्वरभट्टारकौ तथाभूततत्त्वाधिष्ठायकौ तत्र न तत्त्वव्यपदेशो ब्रह्मविष्ण्वादिवत् ।

यस्योन्मेषादुदयो[28] जगतः,—इत्यत्र ईश्वरतत्त्वमेवोन्मेषशब्देनोक्तम् । विश्वस्य हि स्फुटत्वं बाह्यत्वमुन्मेषणं[29], निमेषणं त्वस्फुटत्वापादनमन्तारूपतोद्रेचनम्,—इति निमेषः[30]

२८ यस्योन्मेषादुदय इति मायायां स्फुटेदन्ताभाजोऽर्था ईश्वरपदे सृष्टा भवन्ति तत्रैव परमार्थत इदंभावस्य स्फुटतापत्तेः । ननु च यस्योन्मेषात् जगत उदय इतीश्वरदशा उन्मेषशब्देनोक्ता न युज्यते जगतः प्रलयोदयौ इति वचनात् तत्र जगच्छब्देन वेद्यवर्ग एव कस्मात् गृहीतः, यावता सदाशिवपर्यन्तेऽपि आगमे प्रलयोदयसंभवश्रवणात् । तथा चोक्तं तत्र ।

'यत्सदाशिवपर्यन्तं पार्थिवाद्यं च सुव्रते ।
तत्सर्वं प्राकृतं ज्ञेयं विनाशोत्पत्तिसंयुतम् ॥'

इति । अतश्च तयोरपि उन्मेषनिमेषस्वीकृताभ्यां प्रलयोदयाभ्यां व्यपदेशः कर्तव्य इति चेत् अत्रोक्तम् इदन्ताभागस्यैवापररूपस्य तत्र प्रलयोदयौ परमार्थत उक्तौ मन्तव्यौ तदभिप्रायेणैव च

'मायाकालं परार्धानां गुणयित्वा शतेन च ।
ऐशे दिनं रात्रिरेवम्.................. ॥'

इति कालयोगोऽपि व्यपदिष्टः ॥

२९ उन्मेषणमिति चैतन्यसामर्थ्यम् ।

३० ननु विश्वं निमिषितं चेत् एकरसैवाहन्ता युक्ता सा च शिवता इति निमेषः कथं सदाशिवरूपता ततश्च कथं गुरुभिरुन्मेषनिमेषौ भगवतो व्यतिरेकेण निर्दिष्टौ यस्योन्मेषनिमेषाभ्यामिति । अत्रोक्तमेव विश्वं निमिषितमिति हि विश्वस्य इदन्तास्पर्श एव किंचिद्रूपं वक्तव्यम् न च शिवपदे विश्वं नाम किञ्चित् 'सर्वथात्वन्तरालीन' इति हि वक्ष्यते । यतश्चागमेऽपि उक्तं

'स्वभावेनैव शान्तात्मा घोरः संसार एव हि ।
स यस्मान्नेष्यते पत्युरघोरहृदयस्ततः ॥'

इति । ततश्च विश्वस्य यान्तरिति अहन्तायां परिवर्तमाना ध्यामलता स एव निमेषः अत एव तदा तद्विश्वं प्रलीनमुच्यते व्यवहरणीयत्वाभावात् ॥

सदाशिवतत्त्वं यतो जगतः प्रलयः,— इति शुद्धोऽयं स्पन्दः परमेश्वरस्याचलस्याप्यप्ररूढरूपान्तरापत्तिलक्षणः किंचिच्चलनात्मतया स्फुरद्रूपत्वात्[३१]। [३२]परमेश्वरस्य हि परमार्थत एताः शक्तयो यस्तत्त्वग्रामः, काचित् तु शक्तिरन्यबहुतरशक्तिक्रोडीकारं कुर्वती निकटत्वादुपास्या घटस्येव घटत्वात्मिका, काचिदन्यापेक्षिणी स्वरूपमात्रनिष्ठा दूरा घटस्येव सत्तात्मिका। एवं निमेषोन्मेषशक्ती एव [३३]सदाशिवेश्वरौ तयोस्त्वधिष्ठातृदेवते अपि तथानामे॥

---

३१ यथोक्तं स्पन्दसूत्रेषु।

'गुणादिस्पन्दनिष्यन्दाः सामान्यस्पन्दसंश्रयात्।
लब्धात्मलाभाः························ ॥'

इति।

३२ अत्रैव शिवतत्त्वमाक्षिपति 'परमेश्वरस्य हि' इत्यादिना।

३३ एवमुन्मेषनिमेषात्मकेश्वरसदाशिवलक्षणरूपद्वयस्वीकृतसमस्ततत्त्वं शिवतत्त्वमित्यर्थः। न च पुनरेतत् वक्तव्यं यथा शिवस्य उन्मेषनिमेषौ सदाशिवेश्वरौ तत्त्वान्तरमुक्तौ, तथा तयोरुन्मेषनिमेषव्यापारौ कस्मात् तत्त्वान्तरतया नोक्तौ, यतोऽत्र सदाशिवेश्वरौ शिवतत्त्वात् न भिद्येते ततः सृष्टिप्रलययोः कथं व्यापारान्तरं व्यपदिश्यत इति।

अथ तदधिष्ठातृदेवताद्वयगतं करणं विद्यातत्त्वमाह

सामानाधिकरण्यं च
सद्विद्याहमिदंधियोः ॥ ३ ॥

प्रकाशस्य यदात्ममात्रविश्रमणमनन्योन्मुखस्वात्मप्रकाशताविश्रान्तिलक्षणो विमर्शः सोऽ'हम्' इति उच्यते; यस्त्वन्योन्मुखः स 'इदम्' इति स च स्वप्रकाशमात्रे पुनरनन्योन्मुखरूपे विश्राम्यति परमार्थतः। तत्राद्ये विमर्शेऽपि शिवतत्त्वं, द्वितीये विद्येशता, [३४] मध्यमे तु रूपे 'अहमिदम्' इति समधृततुलापुटन्यायेन यो विमर्शः स सदाशिवनाथ ईश्वरभट्टारके च, इदंभावस्य तु ध्यामलाध्यामलताकृतो विशेषः। ये एते 'अहम्' इति 'इदम्' इति धियौ तयोर्मायाप्रमातरि पृथगधिकरणत्वम् 'अहम्' इति ग्राहके 'इदम्' इति च ग्राह्ये, तन्निरासेनैकस्मिन्नेवाधिकरणे[३५]

३४ यदा मध्यमकोटौ विश्राम्यतस्तदा अहमिदमिति ग्राहके ग्राह्यस्य प्रक्षेपोऽत एव ध्यामलग्राह्यांशो विमर्शः सदाशिवनाथे, इदमहमिति ग्राह्ये स्फुटीभूतेऽहमिति प्रक्षेपात् सामानाधिकरण्यं विमर्श ईश्वरभट्टारक इत्यर्थः।

३५ अधिकरण इति स्वस्वरूपाख्य इत्यर्थः।

यत्संगमनं संबन्धस्वरूपप्रथनं तत् सती शुद्धा विद्या[३६]; अतोऽशुद्धविद्यातो मायाप्रमातृगताया अन्यैव । तत्र[३७] यदा 'अहम्' इत्यस्य यदधिकरणं चिन्मात्ररूपं तत्रैवेदमंशमुल्लासयति तदा तस्यास्फुटत्वात् सदाशिवता 'अहमिदम्' इति । 'इदमहम्' इति तु इदमित्यंशे स्फुटीभूतेऽधिकरणे यदाहमंशविमर्शं निषिञ्चति तदेश्वरता,—इति विभागः ॥ ३ ॥

ननु कस्मादियं शुद्धा विद्या ? इत्याह

इदंभावोपपन्नानां
वेद्यभूमिमुपेयुषाम् ।
भावानां बोधसारत्वा-
द्यथावस्त्ववलोकनात् ॥ ४ ॥

अवलोकनं प्रथनं वेदनं विद्या[३८], यथावस्तुत्वं वस्त्वनुसारित्वं च; तस्याः शुद्धिर्वि[३९]-

---

३६ सदाशिवेश्वरोभयरूपस्य यः स्वरूपादभेदपरामर्शस्तद्विद्या नाम तत्त्वमित्यर्थः ।

३७ तत्रेति शुद्धविद्यायाम् ।

३८ विद्येति सा च वस्त्वनुसारिणी इति ।

३९ तदिदन्ताप्रथितं वेद्यजातं पारमार्थिकेनैव चिदव्यतिरेकेण अहंकाराच्छादितम् 'अहमिदम्' इति सामानाधिकरण्येन यदा परामृश्यते, तदा वस्त्वनुसारित्वात् प्रतीतेः शुद्धत्वम् ।

परीतता। वेद्य[40]दशां चोपगतवतामङ्गीकृतवताम्, अत एवेदमित्येवंभूतेनोचितेन परामर्शेनोपपन्नानां परामृश्यमानानां भावानां 'बोध' एव प्रकाशात्मा साररूपं वस्तु, प्रकाशश्चानन्योन्मुखविमर्शात्माहमिति। तदेषां यदेव पारमार्थिकं रूपं तत्रैव प्ररूढत्वात् अहमित्यस्य शुद्धवेदनरूपत्वम् ॥ ४ ॥

अधिष्ठातृरूपाद्देवताद्वयात् तत्त्वद्वयं विभ[41]क्तम्, — इत्येतद्भङ्ग्या प्रतिपादयत्यागमव्यवहारेण

अत्रा[42]परत्वं भावाना-
मनात्मत्वेन भासनात्।

---

४० अविपरीताख्यामेव शुद्धिमाह वेद्यदशां चेत्यादिना।

४१ विभक्तमिति तत्सनामकमपि एतत्तत्त्वद्वयं भिन्नमेवेति।

४२ आगमेषु तत्त्वगतस्य परापरताव्यवहारस्यावयवार्थव्याकरणपूर्वकं प्रकृतमेव विषयं दर्शयितुं सूत्रम् 'अत्रापरत्वम्' इति। अत्राष्टसहस्याम् अत्रेतीश्वरावस्था निर्दिष्टा तस्या एव परापरतायोगित्वेन परामर्शात् विवृतं च परापरावस्थैषा इति वस्तुतः सर्वशक्तेः चित्स्वभावस्य स्वातन्त्र्यमात्रनिजलक्षणस्यात्मीयस्वातन्त्र्योपपादितोऽवस्थाविशेषो निर्दिष्टः। तत्र परता प्रकृष्टता यदा शुद्धैव स्वतन्त्रदशा शिवतायां ततः परावस्थाभावात् तद्विपरीतमपरं स्वातन्त्र्यस्य च विपरीतता अपूर्णतायां भवति सा चापूर्णता द्वितीयादिति।

परताहन्तयाच्छादा-
त्परापरदशा हि सा ॥ ५ ॥

परत्वं पूर्णत्वमनन्यापेक्षाहमिति, 'अपरत्वम्' अपूर्णतान्यापेक्षेदमिति; अत्र च तत्त्वद्वये भावानां ध्यामलाध्यामलरूपाणामुभयांशस्पर्शात् परापरत्वमिति । वेद्य[४३]भावनिष्ठा दशा तत्त्व[४४]स्वरूपा तदवभासयितृमन्त्रेश्वरादिशुद्धप्रमातृसंवेद्यवस्तुसा[४५]रा। या तु तन्निष्ठसंवेदनदशा सा शुद्धा विद्या, तत्प्रमातृवर्गाधिष्ठातृत्वं श्रीसदाशिवेश्वरभट्टारकरूपता,—इति संक्षेपः[४६] ॥५॥

एवमेकेषां मते 'अहम्' इत्याच्छा[४७]दको यो भागः, तत्प्रथाप्रधाना शुद्धविद्या । अन्ये तु

---

४३ तत्र तावत् अन्यापेक्षमिदमित्येवमपरत्वं भावगतं तत्त्वस्वरूपं विद्याया आह वेद्येति ।

४४ अत एव तत्त्वद्वयेऽपि तावंशौ स्त इत्याशयेनाह तदवभासयितृमन्त्रेश्वरादीति तेन वेद्यांशे संसारिजनतुल्यत्वमेव तेषां वेदकांशमुखेन तूत्कर्ष इत्यर्थः ।

४५ संवेद्यवस्तुसारेति इत्यपरत्वम्, द्वितीयं रूपमाह या तु इति ।

४६ ततश्चेदमुक्तं भवति वेद्यभावनिष्ठा दशा तत्त्वस्वभावा तदवभासयितृशुद्धमातृवेद्यवस्तुसाधना तद्वेद्यनिष्ठसंवेदनदशा तु शुद्धविद्या तत्प्रमातृरूपमन्त्रमहेश्वरादिवर्गाधिष्ठातृत्वं श्रीसदाशिवेश्वरभट्टारकरूपतेति ।

४७ आच्छादक इति संवेदने इति शेषः । अहंविमर्शेन सर्ववेद्यात्मसात्कारेणापरानाकाङ्क्षित्वेनाढ्यतया पूर्णता निर्दिष्टा ।

मन्यन्ते,–योऽसाविदंभाग आच्छादनीयस्तस्य यदवभासनं तत्प्रधाना शुद्धविद्या। अन्यथा हि स इदमशः केन भास्यतां [48]मायायास्तत्राभावात् भावे वा प्ररोहप्रसङ्गात्; अत एवेयं प्ररोहासहिष्णुं यत इदन्तां भासयति [49]ततः शुद्धाभासनाच्च विद्येति। तत एवाप्ररूढमायाकल्पत्वात् महामायेयं श्रीरौरवादिगुरुभिरुपदिष्टा, तदेतदाह

भेदधीरेव भावेषु
कर्तुर्बोधात्मनोऽपि या।
मायाशक्त्येव सा विद्ये-
त्यन्ये विद्येश्वरा यथा॥ ६॥

मायाप्रमातरि शून्यादिरूपेऽप्यनुल्लसिते, चिन्मात्र एव प्रमातरि कर्तरि च सति चिदेकरूपेष्वपि भावेषु यदचिद्रूपतया तदप्रकाशनलक्षणं [50]स्वातन्त्र्यं सा शुद्धविद्या माया-

४८ नहि तत्र मायाप्रमात्रादिसंभवोऽस्ति येनेदमंशो भासेत इत्याह मायाया इति।

४९ तत इति प्ररोहासहिष्णु–इदन्ताभासनात्।

५० स्वातन्त्र्यमिति भेदप्रकाशनलक्षणं मायाशक्तिरूपमिव।

शक्त्या तुल्या,[५१] वेद्यभागे भेदप्रकाशनात् । न च मायैव, ग्राहकस्य चिन्मात्रभागे तावद्विपर्यासनात्, येन प्रकारेण विद्येश्वरा भगवन्तोऽनन्ताद्या वर्तन्ते । ते हि शुद्धचिन्मात्रगृहीताहंभावाः स्वतस्तु भिन्नं वेद्यं पश्यन्ति, यथा द्वैतवादिनामीश्वरः । एवं ग्राहकेंऽशतश्चैतन्यरूपात् परमार्थरूपे ग्राह्यविपर्यासनशक्तिः शुद्धविद्या[५२] विद्येश्वराणाम् ॥ ६ ॥

[५३]परे प्राहुः—भगवतः परमशिवस्याप्ररूढ-

---

५१ तुल्येति प्रमातृभागे विपर्ययाभावात् ।

५२ शुद्धविद्येति परमेश्वरस्वातन्त्र्योपजीविनी विद्येश्वरशक्तिः शुद्धविद्येत्यर्थः । विद्येश्वराणामिति अत एव दीक्षादानार्चनादेरेव तु तद्वशेन कृता तत्प्राप्तिः अकृतप्रायश्चित्तश्च गृहीताधिकारोऽपि अकृताधिकारो योग्यविधिलाभेऽपि तत्पदमेति इति विद्येश्वरा मूर्तिमन्तः प्रमातारः सन्ति । यदाह

'अधिकारं न चेत्कुर्याद्विद्येशः स्यात्तनुक्षये ।'

इति । विद्येश्वरा इति च विद्यातत्त्वे स्थिता ईश्वराः सर्वज्ञाः सर्वकर्तारश्चेति । यथा पार्थिवेऽण्डे ब्रह्माधिपतिः, प्राकृते विष्णुः मायीये रुद्रो न तत्त्वान्तरं तथा इमेऽपि न तत्त्वान्तरमिति नाक्षेपः कार्यः ।

५३ पर इति । अयमर्थः स्वातन्त्र्यात्मिका तावदिच्छैव भगवतः शक्तिः सैव तु कृत्यभेदेन बहुधा उपचर्यते कृत्यभेदमेवाह तत्रेति अप्ररूढभेदम् इदन्ताप्रकाशनेऽस्फुटत्वेनैव इच्छाशक्तिः स्वातन्त्र्यात्मिका ईश्वरस्येति परमेश्वरसंबन्धिनी अप्ररूढभेदत्वादस्फुटेदन्तांशत्वात् सदाशिवत्वे व्याप्रियते । तत्र चास्फुटत्वादेव कृत्यभेदमाश्रित्य तथास्वरूपा सती इच्छाव्यपदेशार्हा, तथैवाप्ररूढभेदम् इदन्तोन्मेदने सैव इच्छाश-

भेदावभासनं सदाशिवेश्वरता । तत्रास्फुटत्वे इच्छाशक्तिरीश्वरस्य व्याप्रियते, स्फुटत्वे ज्ञानशक्तिः, प्ररूढे तु भेदे ग्राह्यविपर्यासेऽपि ग्राहकचिन्मात्रतायां विद्येश्वरेषु क्रियाशक्तिः, ग्राहकग्राह्यविपर्यासद्वयप्ररूढौ तु मायाशक्तिः, सा च पशुप्रमातृषु, ग्राहकग्राह्योभयविपर्याससंस्कारे तु अविनिवृत्तेऽपि[५४] यदेतत् वस्तुपरमार्थप्रथनं[५५] तत्र विद्याशक्तिव्यापारो योगिज्ञानिप्रभृतिष्वपशुप्रमातृषु; तदेतद्दर्शयति

तस्यैश्वर्यस्वभावस्य
पशुभावे प्रकाशिका ।
विद्याशक्तिः.............

'पशुभावे' विपर्यासैकरसत्वलक्षणे पाशनीयत्वेऽस्वतन्त्रे दृश्यद्रष्टृदर्शनभेदे सत्यपि

---

क्तिर्विकसितप्राया ज्ञानशक्तिव्यपदेश्या सैव च प्ररूढौ भेदस्य ग्राह्यविपर्यासे क्रियाशक्तिव्यपदेश्या महामाया नाम विद्येशशक्तिर्भेदप्ररूढत्वात् माया, ग्राहकस्य चिन्मात्ररूपत्वात् महतीति चेत्याद्यन्यत् स्पष्टम् ॥

५४ अविनिवृत्तेऽपीति विपर्यासे निवृत्ते संस्कारे तु अविनिवृत्ते इत्यर्थः ।

५५ वस्तुपरमार्थप्रथनमिति । अत्र हि भगवतः स्वातन्त्र्येण मायाशक्तिव्यतिरेकेण तत्त्वान्तरेण भाव्यमिति भावः ।

जाते पूर्वोक्तयुक्तिबलेन यदेतदैश्वर्यमुक्तं तस्य[५६] या प्रकाशिका परमेश्वरशक्तिः—यद्वशात् केचिदेव ता युक्तीराहृत्य तदाश्वस्तहृदयाः कृतिनो[५७] भवन्ति—सा विद्याशक्तिः । अयमेव षडर्धसारादिदृष्टोऽप्यस्याचार्यस्य हृदयमावर्जयति पक्षः, 'अन्ये' इत्यनुक्तेः । एतदानन्तर्यौचित्येन च मायातत्त्वनिरूपणात् ।

तदाह

·······तिरोधान[५८]-

करी मायाभिधा पुनः ॥ ७ ॥

मायाशक्तिः पुनरचिद्रूपे शून्यादौ प्रमातृताभिमानं प्ररूढं दधती भावानपि चिन्मयान् भेदेनाभिमानयन्ती सर्वथैव स्वरूपं तिरोधत्ते आवृणुते विमोहिनी सा । तिरोधा[५९]-

५६ तस्येति प्रमातृपरमार्थरूपस्य ऐश्वर्यलक्षणस्य स्वभावस्येत्यर्थः ।

५७ कृतिन इति निष्कलप्रमातार इत्यर्थः ।

५८ तिरोधानमावरणं स्वरूपाप्रकाशनं मलमज्ञानं प्रसज्यप्रतिषेधात्मकं यत् तदेकम्, तत्पृष्ठ एव तु तदुपप्राणितपर्युदासात्मना विपरीतप्रकाशरूपं द्वितीयम् ।

५९ अनुग्रहतिरोधानौ हि द्विप्रकारौ लोके प्रसिद्धौ । तत्र मायाविद्याकार्यत्वं मा विज्ञायि इति स्वयमेव व्याचष्टे तिरोधानमत्रेति । तत्र

नमत्र न विलयरूपं मन्तव्यं, यत् कृत्यपञ्चक-मध्य आगमेषु गण्यते, दीक्षितस्यापि गुरु-मन्त्रादिनिन्दनप्रायमपि त्वावरणमेव ॥ ७ ॥

तिरोधानमावरण[६०]रूपं स्फुटयति

भेदे त्वेकरसे भातेऽ-
हंतयानात्मनीक्षिते।
शून्ये बुद्धौ शरीरे वा
मायाशक्तिर्विजृम्भते ॥ ८ ॥

सुषुप्ते प्रलये 'न' इत्यभावसमाधौ च

---

पञ्चकृत्यमध्ये चतुर्थं विलयनामकं तिरोधानशब्देन कार्यत्वेन मायायाः प्रसिद्धम्। यथा यत् किल पारमेश्वरसमयमङ्गीकृतवतोऽपि अन्तस्तद्विषयं द्वेषकालुष्यं तत्कर्मानपेक्षयैव शुद्धया परमेश्वरेच्छयैव प्रकोपापरपर्यायया भवति, तेन सुखदुःखे नियतिवदनालोकिशुभाशुभबलात् भवतः ते धर्माधर्मनिमित्ते, ये तु शुभाशुभानुसरणमन्तरेणैव ते परमेश्वरेच्छात एव केवलायाः, तत्र तत्कृता सुखदुःखावाप्तिः विलयस्तिरोधानं चोच्यते तच्च तात्कालिकमात्रं वा कालान्तरानुबन्धि वा पूर्वं कामान्धकत्रिपुररावणादीनाम्, उत्तरं तु शिवगुरुशास्त्रसमयादिद्वेषिणां नरकपातमयम्, एवमनुग्रहश्च क्रमिकः अक्रमिकश्च। क्रमिको वरदानात्मा नन्दीश्वरादिषु, अक्रमिकस्तु दीक्षाग्राह्यादिर्झगित्येवापवर्गदः सिद्धिप्रेप्सया धनादिकाम्यया आर्तिविनिविवारयिषयापि वा च यत्परमेश्वरसमयप्रतिपादनं तदप्यनुग्रहरूपमेवेति।

६० विद्यास्वरूपं स्फुटयितुं मायातो व्यतिरेचनं यद्वक्तव्यं तदाशयेन यन्मायायाः स्वरूपमुक्तं तदेव सूत्रान्तरेण स्पष्टीक्रियत इत्याह आवरणरूपं स्फुटयतीत्यादिना।

तावच्छून्यमाकाशकल्पमनात्मरूपं वेद्यं[६१] भावोचितम् 'अहम्' इत्यात्मत्वेन वीक्ष्यते; उच्छ्वसननिःश्वसनादौ वा अहमुच्छ्वसिमि,[६२]—इति प्राणो वायुकल्पः, स्थावरजङ्गमजिघत्सामन्युप्रज्वलनादौ वा प्राण एव तेजःसमुपबृंहितः, स्वच्छोदकाशयकल्पा वेद्यप्रतिबिम्बनवती वा बुद्धिरभिनिविश्यते। अन्तरहं वेद्मि दुःख्यहमिति चिन्ताद्यवस्थासु, शरीरमेव पृथिवीप्रायं कृशो[६३]ऽहमित्यादिदशासु अहमित्यात्मतया भाति। सर्वं चैवेदं शून्यादि वस्तुतश्चिन्मात्र[६४]सारमेव माययैव तावदचि-

---

६१ वेद्यभावोचितमहमिति स्पन्दशास्त्रेऽभिहितं यथा।

'नाभावो भाव्यतामेति न च तत्रास्त्यमूढता।
यतोऽभियोगसंस्पर्शात्तदासीदिति निश्चयः॥
अतस्तत्कृत्रिमं ज्ञेयं सौषुप्तपदवत्सदा।
न त्वेवं स्मर्यमाणत्वं तत्त्वं प्रतिपद्यते॥'

इति। यतश्चैवं ततोऽनात्मैवाहन्तयात्र प्रतिपन्न इति बोध्यम्॥ आत्मत्वेन वीक्ष्यत इति। तच्चाकाशकल्पमनुस्मार्यमाणत्वेन वेद्यमेव परमार्थतः सदहमित्यात्मत्वेन भाति।

६२ अत्र निःश्वसिमीति च बोध्यम्। वायुकल्प इत्यत्र 'अहमिति वीक्ष्यत' इति संबध्यते। स्थावरजङ्गमेति, बुभुक्षे पिपासामि इति प्रत्यक्षे।

६३ स्थूलोऽहं—गौरोऽहमित्यादौ चेति बोध्यम्।

६४ चिन्मात्रसारमेवेति 'तद्रहितं किञ्चित्' इति न्यायात्।

[६५]द्रूपतया भासितम् । तथा[६६]विधमेव तु सत् अहमिति संविद्रूपताभिनिवेशस्थानं संपा[६७]दितमप्रशान्तजडभावमेव, — इति दुष्करतमवस्तुसंपादनाप्रतीघातरूपा परमेश्वरस्य मायाशक्तिः, — इत्येतत् 'विजृम्भते' इत्यनेन दर्शितम् । वा[६८]ग्रहणेन वेद्यरूपाणां सुतधनदारादीनामप्यहंताभिनिवेशविषयत्वमसंख्यातं सूचयति ॥ ८ ॥

नन्वचिद्रूपत्वादनात्मा यदि शून्यादिस्तदात्मतयासौ अभिनिविश्यमानश्चिद्रूप[६९] एव, — इति सर्वज्ञत्वसर्वकर्तृत्वादिविशुद्धैश्वर्यधर्मैव स्यात्, — इत्याशङ्क्याह

---

६५ अचिद्रूपतयेति । वेद्यतया भासितं सदिति प्रथमो मायीयो व्यत्ययः ।

६६ तथाविधमिति अचिद्रूपमतिरस्कृतवेद्यभावमेव, तथात्वे च जडमेव च सदिति ।

६७ संपादितमिति । द्वितीयोऽयं मायीयो व्यत्ययः ।

६८ चाग्रहणेन विवेकावगम्यतायामपि बुद्धिप्राणशून्यप्रमातृभावस्य हेयत्वेनाविशेष इति वदितुं सुतधनेत्याद्युक्तम् ।

६९ चिद्रूप एव इतीति, चिद्रूपता चानावृतेति सर्वज्ञत्वादिधर्मयोगेनापि भवितव्यमेवेत्याह सर्वज्ञत्वेत्यादि ।

यँश्च[70] प्रमाता शून्यादिः
प्रमेये व्यतिरेकिणि ।
माता स मेयः सन्काला-
दिकपञ्चकवेष्टितः ॥ ९ ॥

स्यादैश्वर्यधर्मयोगः शून्यादेः, यदि अह-मित्यभिनिविश्यमानोऽपि मेयतां जह्यात्[71]; तथा हि सति प्रमेयमप्यस्य नीलादिव्यति-रिक्ततया नैव भासेत । यावता यः शून्यादिः प्रमाता कथितः, स यावदेव स्वरूपाद्व्यतिरे-काभिमते नीलादौ प्रमेये माता तावदेव स्वयमपि मेयभूत एव सन् माता । मेयं[72] हि मीयमानत्वादेव परिमितम्, — इति तादृशा-देव मेयान्तरादुपपन्नव्यतिरेकं[73], न त्वेवं चिद्रू-पमपरिमितत्वात् । परिमितत्वं च शून्यादेरहं-

७० तत्त्वपञ्चकसंवलितपुंस्तत्त्वेनाशङ्कापवाद इति ।

७१ शून्यादिरिति शेषः । कुतोऽस्य मेयत्वं प्रमातृस्वरूपत्वादित्यत आह तथाहीति ।

७२ मातुः कथं मेयत्वमिति मातृमेययोर्विवेकं तावत् करोति मेयं हीति । अयमर्थः—यदि हि प्रमातृदशायां शून्यादिर्माता मेयतां जह्यात् न त्वेवं, तथा हि सति व्यतिरिक्ते मेये कथं माता भवेत् । पारिमित्यं हि अत्र मातुः प्रमेयत्वे व्यतिरेके च हेतुरिति ।

७३ मेयान्तरात् घटादेः।

भावस्य यत् तदेव कालादिपञ्चकम् । तथा हि कालः क्रममासूत्रयन् प्रमातरि[७४] विजृम्भमाणस्तदनुसारेण प्रमेयेऽपि प्रसरति, यो[७५]ऽहं कृशोऽभवं स स्थूलो वर्ते भविष्यामि स्थूलतरः,—इत्येवमात्मानं देहरूपं क्रमवन्तमिव परामृशंस्तत्सहचारिणि प्रमेयेऽपि भूतादिरूपं क्रमं प्रकाशयति । अस्य शून्यादेर्जडस्य विद्या[७६] किंचिज्ज्ञत्वोन्मीलनरूपा बुद्धिदर्पणसंक्रान्तं भावराशिं नीलसुखादिं विविनक्ति । कला किंचित्[७७]कर्तृत्वोपोद्बलनमयी कार्यमुद्भावयति,

---

७४ कालो हि स्फुटास्फुटरूपतया आभासक्रियामेव भावाभाववतीं निर्भासयता परमेश्वरेण सृष्टः, स चाभासनक्रिययैव भावाभाववति इदन्ताभागे पतितत्वात् अहमित्यवभासलीनत्वाच्च प्रमातर्येव प्रथमं स्फुरति तदेवाह प्रमातरि विजृम्भमाण इति ।

७५ तत्र तावत् प्रमातरि आरोपयति य इति ।

७६ नहि कर्तृत्वमज्ञस्येति हि अज्ञत्वात् किञ्चिज्ज्ञत्वोन्मीलनरूपा विद्या जाता । ननु च साङ्ख्यैरनभिहितस्य कर्तृत्वस्य उपपादकं कलातत्त्वं चेदुच्यते युक्तं, तैः पुनर्बुद्ध्यादिद्वारेणोक्तस्य ज्ञत्वस्याभिधायि विद्यातत्त्वं किमर्थमित्याह बुद्धिदर्पणसंक्रान्तमिति । अयं भावः बुद्धेर्गुणसंकीर्णाकाराया विवेकेन ग्रहीतुमसामर्थ्यात् सा पुनर्विद्या बुद्धिं पश्यति, तद्गतांश्च सुखादीन् बुद्धेरसामर्थ्यात् विवेकेन गृह्णाति तस्मात् बुद्धिप्रतिबिम्बितो भावो विद्यया विविच्यते इति भावः ।

७७ अत्र च किञ्चित्कर्तृत्वं किञ्चिद्रागसिद्ध्ये क्वचिदेव कर्तृत्वमित्यत्रार्थे पर्यवस्यतीति ।

किंचिज्जानामि किंचित्करोमि,—इति । अत्र चांशे तुल्ये किंचित्त्वे कस्मादिदमेव किंचित्,—इत्यत्रार्थेऽभिष्वङ्गरूपः प्रमातरि देहादौ प्रमेये च गुणारोपणमय इव रागो व्याप्रियते[७८] । न च तद्बुद्धिगतमवैराग्यमेव, तद्धि स्थूलं वृद्धस्य प्रमदायां न भवेदपि रागस्तु भवत्येव । बुद्धिधर्माष्टकेऽपि च दृष्टोऽभिष्वङ्गः । अत्रैव कस्मादभिष्वङ्ग,—इत्ययमर्थो नियत्या नियम्यते इति । एवं कलाविद्याकालरागनियतिभिरोतप्रोतो माययापहृतैश्वर्यसर्वस्वः सन् पुनरपि प्रतिवितीर्णतत्सर्वस्वराशिमध्यगतभागमात्र एवंभूतोऽयं मितः प्रमाता भाति—इदानीमिदं किंचिज्जानानः, इदं कुर्वाणोऽत्र रक्तोऽत्रैव च यः सोऽहम्—इति । एषां च भिन्नविषयत्वमपि भवति कदाचित्—यथान्यत्र रक्तोऽपि नियत्यान्यत् कार्यते—इति । एते

---

७८ व्याप्रियत इति गुणवति रागदर्शनात् । ननु अत्र रागो बुद्धिधर्मतया साङ्ख्यैरभ्युपगत इत्यलं तत्त्वान्तरकथनेन इत्यत आह न चेत्यादि । अवैराग्येऽपि अरक्तिदर्शनात् वैराग्ये धर्मादावपि च रक्तिर्दृश्यते तृप्तस्य चान्नादौ अवैराग्याभावेऽपि अन्तःस्थरागानपायात् तेन विना पुनरवैराग्यानुत्पत्तिप्रसङ्गात् ।

च प्रमातृलग्नतयैव भान्ति,—इति तस्यैव शक्तिरूपाः प्रतिप्रमातृभिन्ना[79] एव, कदाचित् तु नटमल्लप्रेक्षादावीश्वरेच्छया एकीभवेयुरपि[80]। न ह्येषामी[81]श्वरेच्छातिरिक्तं निजं किमपि जीवितमस्ति,—इत्यसकृदुक्तं वक्ष्यते च ॥ ९ ॥

यदुक्तमिदमित्यत्र प्रमेये व्यतिरेकिणि माता,—इति तत्र तत्प्रमेयं दर्शयति

त्रयोविंशतिधा मेयं
यत्कार्यकरणात्मकम्।
तस्याविभागरूप्येकं
प्रधानं[82] मूलकारणम् ॥ १० ॥

यत् कार्यकरणरूपं त्रयोविंशतिप्रकारं, यच्च

---

७९ तत्कार्यस्य कर्तृतोपोद्बलनादेः प्रत्यात्मभेदेनोपलम्भात्।

८० सामाजिकात्मनामिव इति शेषः।

८१ एषामिति, मायागर्भाधिकारिणस्तु कस्यचित् ईश्वरस्य प्रसादात् सर्वकर्मक्षये मायापुरुषविवेको भवति येन मायोर्ध्वे विज्ञानाकल आस्ते न जातुचित् मायाधः, कलापुंविवेको वा येन कलोर्ध्वे तिष्ठति, प्रकृति-पुरुषविवेको वा येन प्रधानाधो न संसरेत् इति। तत्रायं कलादिवर्गो द्विधा शुद्धाशुद्धत्वाभ्यां, तत्राशुद्धो विक्षेपमयः शुद्धस्तु परमेश्वरविषयतया तत्स्वरूपलाभानुगुणनिजकार्यकारी संसारप्रतिद्वन्द्वित्वात् इति।

८२ सकलभेदानभिव्यक्तिकमविभागरूपं, प्रधीयतेऽत्र विश्वं सृष्टौ यत्र च प्रलीनं सत् प्रलये इत्युक्तं प्रधानम्।

तस्य मूलभूतं कारणं सर्वकार्यकरणाविभागरूपं प्रधानं नाम तत्सर्वं मेयम्, — इति संबन्धः । योगिमन्त्र[83]तदीश्वरप्रभृतीनां हि भूततन्मात्रकरणप्रधानवशीकारयोगित्वात् सर्वमेव प्रमेयम् । संसारिणामप्यनुमानागमादिदिशा प्रमेयमेव, — इतीयत् प्रमेयम् । कालादयस्तु प्रमेया अपि प्रमातयैव लग्नाः, — इति प्रमातृशक्तिस्वभावत्वात् न प्रमेयत्वेनेहावसरे मायाप्रमातृव्यतिरिक्तप्रमेयप्रस्तावात्मनि गणिताः । वस्तुतो हि अत्र योऽयं प्रमातापि स प्रमेय एव, स तु प्रमात्रीक्रियमाण आच्छादितप्रमेयताक इहोच्यते ॥ १० ॥

नन्वत्र त्रयोविंशतौ किं कार्यं किं करणम्? इत्याशङ्क्याह

त्रयोदशविधा चात्र
बाह्यान्तःकरणावली ।
कार्यवर्गश्च दशधा
स्थूलसूक्ष्मत्वभेदतः ॥ ११ ॥

---

८३ मन्त्रा विद्येशाः, तदीश्वरा मन्त्रेश्वराः, प्रभृतिना मन्त्रमहेश्वराणां ग्रहणम् ।

प्रमातुः पूर्वं करणोपयोगः,—इत्यत्रादौ त्रयोदश करणानि; तत्र बुद्धिर्[८४]अध्यवसायसामान्यमात्ररूपा, ग्राह्यग्राहकाभिमानरूपोऽहंकारः, संकल्पादिकारणं [८५]मनः,—इत्यन्तःकरणं त्रिधा। बुद्धौ शब्दाद्यध्यवसायरूपायामुपयोगीनि बुद्धीन्द्रियाणि पञ्च—[८६]श्रोत्रं, त्वक्, चक्षुः, जिह्वा, घ्राणम्,—इति। [८७]कर्मणि तूपयोगीनि पञ्च कर्मेन्द्रियाणि। तथा हि—त्यागो ग्रहणं

---

८४ तत्त्वेशक्षोभितात् गुणतत्त्वात् बुद्धितत्त्वं यत्र पुंस्प्रकाशो विषयश्च प्रतिबिम्बमर्पयतः, बुद्धितत्त्वादहङ्कारो येन बुद्धिप्रतिबिम्बिते वेद्यसंपर्ककलुषे पुंस्प्रकाशेऽनात्मनि आत्माभिमानः शुक्तौ रजताभिमानवत्, अत एव कार इति कृतकत्वमस्योक्तं, साङ्ख्यस्य तु एतत् नोपपद्यते, स हि नात्मनोऽहंविमर्शमयतामिच्छति वयं तु तस्य कर्तृत्वमपि चेच्छाम इति।

८५ मन इति, सात्त्विकादहङ्कारात् सर्वतन्मात्रसामर्थ्ययुक्तात् मनो जायते तच्च सर्वविषयम्।

८६ तत्र शब्दसामर्थ्याविर्भावनविशिष्टात् सात्त्विकादहङ्कारात् श्रोत्रम् एवं यावत् घ्राणे गन्धजननयोग्यतायुक्त इति बोध्यमिति च, भौतिकत्वमन्यैरुक्तं न युक्तम् अहं शृणोमि इत्यनुगमात् स्फुटमेषामाहङ्कारिकत्वमिति।

८७ तदित्थं मुख्ये करणे द्वे पुंसः ज्ञाने विद्या क्रियायां कला, अतश्चान्धस्य पङ्गोश्चान्तारूपज्ञानक्रियानपगमात्। तदुक्तम्

'विद्यां विना हि नान्येषां करणानां निजा स्थितिः।
कलां विना न तस्याश्च कर्तृत्वं ज्ञातृता यतः॥
कलाविद्ये ततः पुंसां मुख्यं तत्करणं विदुः।'

इति। ततश्चोद्रिक्ततन्मात्रभागविशिष्टात्तु सात्त्विकादेवाहङ्कारात् कर्मेन्द्रियपञ्चकम्।

द्वयम्,—इति बहिर्विषयं यत् तत्र पाणिः पायुः पादः,—इति करणानि। एतदेवान्तः प्राणे येन क्रियते तद्वागिन्द्रियम्। तत्प्रक्षोभ[८९]प्रशान्त्या विश्रान्तिक्रियोपयोगी उपस्थः। सर्वदेहव्यापकानि च कर्मेन्द्रियाण्यहङ्कारविशेषात्मकानि। [९०]तेन च्छिन्नहस्तो बाहुभ्यामादधानः पाणिनैवादत्ते, एवमन्यत्। केवलं तत्तत्स्फुटपूर्णवृत्तिलाभस्थानत्वात् पञ्चाङ्गुलिरूपमधिष्ठानमस्योच्यते,—इत्येवं करणानि त्रयोदश। एषां च कार्यत्वेऽप्यसाधारणेन करणत्वेन व्यपदेशः। स्थूलं कार्यं पृथिवी, आपः, तेजो, वायुः, नभः,—इति पञ्च भूतानि। सूक्ष्ममेषामेव रूपं, गन्धो, रसो, रूपं, स्पर्शः, शब्दः,—इति। [९१]तत्रैकैकगुणमाकाशादि, एकैकवृद्धगुणं वा,—इति दर्शनभेदः,—

---

८८ द्वयमिति त्यागग्रहणरूपं चरणे।

८९ अत्र हि इदं हेयमिदमुपादेयमिति क्षोभः प्रशाम्यतीत्यर्थः।

९० तेन कर्मानन्त्यं नेन्द्रियानन्त्यमावहेदित्यर्थः।

९१ भोक्रंशच्छादकात् तमःप्रधानादहङ्कारात् तन्मात्राणि वेद्यैकरूपाणि पञ्च, शब्दविशेषाणां हि क्षोभात्मनां यदेकमक्षोभात्मकं प्रागभावि सामान्यमविशेषात्मकं तत् शब्दतन्मात्रम् एवं परचतुष्केऽपि वाच्यम्। तत्र शब्दतन्मात्रात् क्षुभितात् अवकाशदानव्यापारं नभः शब्दस्य वाच्याध्यासावकाशसहत्वात्, स्पर्शतन्मात्रं क्षुभितं वायुः शब्दस्तु अस्य

इति न विवेचितोऽनुपयोगात्। तत्र स्थूलं विभक्तमविभागस्यानुमापकम्, — इति स्थूलरूपोपक्रमसुक्तम्। तत्र पृथिव्याद्याभासा एव मिश्रीभूय घटादिस्वलक्षणीभूताः कर्मेन्द्रियैरुपसर्पिता, बुद्धीन्द्रियैरालोचिता, अन्तःकरणेन संकल्पिताभिमतनिश्चितरूपा, विद्यया विवेचिताः, कलादिभिरनुरञ्जिताः, प्रमातरि विश्राम्यन्ति[९२], — इति तात्पर्यम्। एतच्च विस्तरतस्तत्प्रधानेषु तन्त्रालोकसारादिषु मया निर्णीतम्[९३], — इतीहानुपयोगान्न वितानितम्, — इति शिवम् ॥ ११ ॥

इति श्रीमदाचार्योत्पलदेवविरचितायामीश्वरप्रत्यभिज्ञायां श्रीमदाचार्याभिनवगुप्तविरचितविमर्शिन्याख्यटीकोपेतायामागमाधिकारे तत्त्वनिरूपणाख्यं प्रथममाह्निकम् ॥ १ ॥

---

प० ५ ख० कर्मेन्द्रियैरुपलक्षिता इति पाठः।

---

नभसा विरहाभावात्, रूपं क्षुभितं तेजः पूर्वगुणौ तु पूर्ववत्, गन्धः क्षुभितो धरा पूर्वे चत्वारः पूर्ववत्, अन्ये तु स्पर्शशब्दाभ्यां वायुरित्यादिक्रमेण पञ्चभ्यो धरणीत्युक्तं तन्त्रेत्यादि।

९२ कलादिभिः प्रमातारमुपदधद्भिरनुपरञ्जिता मायाप्रमातरि विश्रान्तिद्वारेणाभिन्ना अपि सन्तो 'यद्यप्यर्थस्थितिः' इति न्यायेन सत्यप्रमातर्येव भेदविगलनतारतम्येन विगलितस्वकभेदाः प्रकाशविमर्शपरमार्थतयैव विश्राम्यन्तीति शिवम्।

९३ न्यक्षेण दर्शितमित्यर्थः।

## आगमाधिकारे
## द्वितीयमाह्निकम् ।

अखण्डितस्वभावोऽपि विचित्रां मातृकल्पनाम् ।
स्वहृन्मण्डलचक्रे[1] यः प्रथयेत्तं स्तुमः शिवम् ॥

एवं तत्त्वराशौ निर्णीते[2] एतदन्तर्भावेनोक्तमपि[3] मुख्यतया निर्णेतव्यं प्रमातृतत्त्वं वितत्य निर्णेतुं 'तत्रैतन्मातृतामात्र' इत्यादि 'व्यानो विश्वात्मकः परः' इत्यन्तैर्विंशतिश्लोकैराह्निकान्तरं[4] प्रस्तूयते । तथाहि[5]—

प्रमातुरत्र स्वरूपप्रत्यभिज्ञानमुपदिश्यते शास्त्रे । स हि हेयमुपादेयं च स्वं स्वभावं विद्वान् परमोपादेयरूपं शिवस्वभावं स्वात्मानमभेदेनाविशन् जीवन्नेव मुक्तो भवति,—इति । तत्र श्लोकेन ब्रह्मादित्रयस्वरू-

---

१ स्वहृन्मण्डलचक्रे इति परावाग्रूपे इत्यर्थः ।

२ प्रमेयतया इति शेषः ।

३ उक्तमपि इत्यत्र प्रमातृतत्त्वमिति संबध्यते ।

४ विमर्शान्तरमित्यर्थः ।

५ इह हि मुख्यतया स्वात्मनि ईश्वरताप्रत्यभिज्ञापनं प्रकृतमतश्च तदेव सर्वतः सर्वथा निर्णेतव्यमित्यर्थः । तदेवाह तथा हीत्यादिना ।

पम्, ततोऽपि द्वयेन हेयोपादेयप्रमातृतत्त्वम्, ततस्तदुपयोगिमलस्वरूपं, तत्कृतं च प्रमातृभेदं श्लोकसप्तकेन, द्वयेन समावेशस्वरूपम्[6], श्लोकपञ्चकेन प्रमातुरेव सुषुप्ताद्यवस्थाः[7], त्रयेण तासां हेयोपादेयविभागं निरूपयति,—इत्याह्निकतात्पर्यम् । ग्रन्थार्थस्तु निरूप्यते ॥

तत्रैतन्मातृतामात्र-
स्थितौ रुद्रोऽधिदैवतम् ।
भिन्नप्रमेयप्रसरे
ब्रह्मविष्णू व्यवस्थितौ ॥ १ ॥

तत्रेति, एवंभूतेऽस्मिन्नागमसिद्धे युक्त्यनु[8]गते च तत्त्वस्वरूपे सति यदेतत् कालादिपञ्चकवेष्टितं प्रमातृतारूपं, तदेव[9] यस्यां शुद्धमुपसंहृतप्रमेयं[10]जातं भवति दशायां संहाराख्यायां

---

६ इयता च हेयरूपे प्रमातुरुक्ते तदुपादेयरूपाभिधानाय समावेशस्वरूपमित्यर्थः ।

७ तत्स्वरूपमित्यर्थः ।

८ युक्त्यनुगते संवेदनयुक्त्युपबृंहिते । तत्त्वस्वरूपे मातृमेयात्मनि सति निर्णीयमाने प्रस्तुते ।

९ मात्रशब्दस्यार्थमाह तदेव यस्यां शुद्धमित्यादिना ।

१० उपसंहृतप्रमेयजातं प्रमेयान्तर्मुखमित्यर्थः ।

तस्यामधिष्ठातृदेवतात्वं तद्दशासंपादनेन स्वोपासकलोकस्य तद्दशाध्यानावेशसमापन्नस्य स्वाभिमुख्यसंपादनेन च भजमानो भट्टारक ईश्वर[11] एव रुद्रो भगवान्, यो मायापदेऽपि प्राणापानात्मकधर्माधर्मसूर्येन्दुदिननिशादिवि[12]मुक्तमध्यमज्योतीरूपप्रमातृस्वरूपस्पर्शाद्[13] उन्मीलिततृतीयनेत्रो, भिन्नस्य तु प्रमेयस्य 'प्रसरे' संपादनेऽधिष्ठातृदेवतात्वं भजन् ब्रह्मा, प्रसृते भिन्ने प्रमेये तत्संतानप्रवहणलक्षणे प्रसरेऽधिष्ठातृदेवता विष्णुः, अत एव तयोः प्रमेयप्रसररूपस्य 'इदं[14] नीलम्' इत्येवं प्रकाशा-

पं० ५ ग० पु० विमुक्तेति पाठः ।

११ भगवान् परमशिव एवेश्वरतां भजमानः सन् रुद्रत्वेनाधिष्ठातेत्यर्थः ।

१२ आदिना मृतकसूतकादिविभागरहितत्वम् ।

१३ अत एव प्रपञ्चविगलने यदैश्वर्यं तत एव हि किल बुद्धिगुणस्यैश्वर्यस्य प्रत्यस्तमयः सत एव न्यक्करणं न तु अत्यन्तमभावः तस्मिन् सति

'तदा तस्मिन्महाव्योम्नि प्रलीनशशिभास्करे' ।

इति च मध्यमे महाव्योम्नि एकघनतासमापत्त्यभावेऽपि अनुप्रवेशमात्रमस्तीति तृतीयनेत्रेणोदानमहातेजःप्रबोधात् भेददहनात्मना योग इति 'स्पर्शात्' इत्यनेन द्योतितं, स्पर्श एव न पुनः समापत्तिः ।

१४ प्रमेयमेवेदमिति प्रकाशात्मना प्रधानीकुर्वाणौ अहमिति च प्रमातृतासारस्वरूपं च न्यक्कुर्वाणौ ब्रह्मविष्णू अत एव च तयोर्बुद्धिगुणाभ्यामेवैश्वर्यज्ञानाभ्यां योग इति रुद्रस्य तु शुद्धमैश्वर्यं ज्ञानं चेति ।

त्मनः प्राधान्यात् 'अहम्' इति प्रमातृदशावेशशून्यत्वात् न तृतीयनेत्रोन्मीलनम्। देवतैव दैवतम्। 'प्रसर' उत्पत्तिः[१५] संतानश्च ॥ १ ॥

यदेतन्मातृतामात्रमुक्तं तस्य विभागमाग[१६]मिकं च संज्ञा[१७]भेदं निरूपयति

एष प्रमाता मायान्धः
संसारी कर्मबन्धनः।
विद्याभिज्ञापितैश्वर्य-
श्चिद्घनो मुक्त उच्यते ॥ २ ॥

---

१५ आगमिकार्थत्वेनापि अयं श्लोको मध्यायां विवृतो यथा जागरावस्थायां ब्रह्मा हृदब्जगतत्वात् कमलासनः अत एव तत्र प्रथमक्षणे स भावाभासोऽस्तीति। विष्णुस्तु स्मृत्यवस्थामपि स्वप्नावस्थामपि प्रतिपद्यते इत्येवंभूतमनुवर्तमानं कुर्वाणः पालक उच्यते, स एव मध्यमावैखर्यात्मकानुवर्तनोल्लासपदे परमेश्वरात् प्रभृति पशुमातृपर्यन्तमातृवर्गे कण्ठभूमौ वर्तमानः, हृदये हि प्रथमपश्यन्तीप्रसरात्मनि प्रतिभारूपत्वेन प्राथमकल्पिकी सृष्टिः

'यथेच्छाभ्यर्थितो धाता जाग्रतोऽर्थान्।'

इति स्थित्या। रुद्रावस्था तु समस्तवादोपसंहाररूपानाहतपरवाक्तत्त्वानुप्रवेशे प्रारम्भभुवि तालुनि सर्वोपसंहारात्मकसुषुप्तलक्षणेति तत एव ब्रह्महृदयो विष्णुकण्ठो रुद्रतालुरीश्वरभ्रूमध्यः सदाशिवोर्ध्वब्रह्मरन्ध्रोऽनाश्रितात्मकशक्तिसोपानोपरिपदः कारणषट्कविग्रहः परमेश्वर इति।

१६ तेन च विभागेन कालादितत्त्वान्तरयोगोऽवश्योपगम्य इति विभागेऽत्रान्तर्भवति।

१७ निर्वचनतः।

स्वाङ्गरूपेषु भावेषु
प्रमाता कथ्यते पतिः।
मायातो भेदिषु क्लेश-
कर्मादिकलुषः पशुः॥ २॥

माययान्धो विमोहितः[१८], अत एव कर्माणि स्वात्मनो बन्धकान्यभिमन्यमान 'एष' इति कालादिवेष्टितः शून्यादिप्रमाता[१९] संसरति,— इत्यतः संसारी। देहोऽपि हि स्वरूपसादृश्यं बाल्ययौवनादिष्वनुवर्तयन् संसरतीव। बुद्ध्यादेस्तु जन्मान्तरेऽपि संसरणम्। विद्यया तु स्वरूपप्रकाशनशक्त्या प्रत्यभिज्ञापदं प्रापितमैश्वर्यं यस्य, अत एव शरीराद्यपि विश्वमपि संवेदनमेवाभिमन्यमानो,ऽत एव चिदेव घना अन्याचिद्रूपव्यामिश्रणशून्या यस्य रूपं, स पुनर्जन्मबन्धविरहात् देहेऽपि स्थिते 'मुक्त' इति व्यपदेशयोग्यः। पतिते तु शिव एकघनः,—

१८ अनेन मायाया मोहकत्वेनासंविद्रूपत्वमुक्तं; संविद्रूपत्वे पुनस्तस्य प्रत्युत शक्तिर्माया, नतु तदधीनोऽसौ येन तस्याः स इत्युच्येतेति बोध्यम्।

१९ शून्यपुर्यष्टकसंकुचितसंविस्स्वभावः।

इति कः कुतो मुक्तः । भूतपूर्वगत्या तु प्रमात्रन्तरापेक्षया मुक्तः शिवः,—इति व्यवहारः । यश्चासौ[20] मुक्तः स भावान् स्वाङ्गवदभिमन्यमानः प्रमिमीते,—इति स तेषां स्वामी स्वरूपपरमार्थसमर्पणाच्च पालकः, —इति[21] पतिरुपदिष्टः शास्त्रे । मायाशक्तिकृतभेदान् व्यतिरिक्तानेव सतो यदा मिमीते तदा तैरेव मेयैः पाशरूपैः पाशितः,—इति पशुरुक्तः । तथाहि वेद्यराशिवशादेवास्याविद्यास्मितारागद्वेषाभिनिवेशादयः क्लेशाः, धर्माधर्मादिरूपाणि कर्माणि, आदिपदादाशयरूपा वासना, फलभोगरूपो विपाकः,—इति कालु[22]ष्यमनन्तप्रकारं, यतः पाशितत्वात् 'पशुः' इत्युक्तः ॥ ३ ॥

यदेवैतत्पशुरूपं तदेवागमेषु त्रिविधं मलम्,—इत्याह

स्वातन्त्र्यहानिर्बोधस्य
　　स्वातन्त्र्यस्याप्यबोधता ।

---

२० द्वितीयं श्लोकं विवृणोति यश्चेति ।

२१ तदयमीश्वररूपतासमाविष्ट इतीश्वरवदेव पतिः ।

२२ कालुष्यमपहस्तितैकरसस्वातन्त्र्यम् ।

द्विधाणवं मलमिदं
स्वस्वरूपापहानितः ॥ ४ ॥
भिन्नवेद्यप्रथात्रैव
मायाख्यं जन्मभोगदम्।
कर्तर्यबोधे कार्मं तु
मायाशक्त्यैव तत्रयम् ॥ ५ ॥

इह ज्ञातृकर्तृरूपं तावच्चित्तत्त्वस्य स्वरूपं, तस्यापहारो नामाणवं मलं येनासावणुः संकुचितो जातः। तत्र स्वरूपस्य निमीलनं संकोचः, तत्स्थिते बोधरूपे कर्तृत्वलक्षणस्य स्वातन्त्र्यात्मनः स्वरूपान्तरस्य निमीलनं विपर्ययो वा,—इत्युभयथाप्याणवं मलं स्वरूपापहानिरूपमेकमेव। अत्रैवेति, सत्याणवे मले द्विप्रकारे स्वरूपसंकोचे वृत्ते भिन्नस्य यत्प्रथनं तस्य 'मायीयम्' इति संज्ञामात्रम्। मायाकृतत्वेन मायीयता मलत्रयस्यापि। तत्र कर्तुरबोधरूपस्य देहादेर्भिन्नवेद्यप्रथने सति धर्माधर्मरूपं कार्मं मलं, यतो जन्म भोगश्च स च

नियतावधिकः,— इति 'जात्यायुर्भोगफलं कर्म' इत्युक्तं भवति ॥ ४ ॥ ५ ॥

अथैषां मलानां विविक्तविषयनिरूपणात् स्वरूपं स्फुटीकर्तुं 'स्वातन्त्र्यहानिर्बोधस्य' इत्यस्य तावद्विषयमाह

शुद्धबोधात्मकत्वेऽपि
येषां नोत्तमकर्तृता ।
निर्मिताः स्वात्मनो भिन्ना
भर्त्रा ते कर्तृतात्ययात् ॥ ६ ॥

येषां चिन्मात्रमेव परमार्थो न तु 'अहम्' इति स्वात्मविश्रान्त्यानन्दरूपं परमं स्वातन्त्र्यं, ते परमेश्वरेण[२३] तथा निर्मिताः स्वात्मनः सकाशाद्व्यतिरिक्ताः। अत्र हेतुः[२४]— 'क-

पं० १० क० ग० पु० परमार्थत इति पाठः।

२३ अप्रतिहतपरिपुष्टस्वातन्त्र्येण तथा बुभूषुणा।

२४ ननु वस्तुतस्ते विज्ञानाकलादयः परमेश्वरादभिन्ना एव ततः कस्य तत्स्वातन्त्र्यमुच्यतां किं भगवत एवोत तेषामपि । अत्रोच्यते यो हि तथा बुभूषुर्न प्रतिहन्यते स स्वतन्त्रः। एतच्च भगवत एव तस्यैव सर्वपूर्णत्वेन स्वामिन इत्युक्तनयेन बुभूषालक्षणयेच्छया योगात् इत्यन्नाशयः।

तृतीया' उत्तमस्वातन्त्र्यलक्षणाया 'अत्ययात्' अभावात्; परमेश्वरस्य तूत्तमस्वातन्त्र्यावियुक्तबोधरूपत्वम्, — इत्यभिप्रायशेषः ॥ ६ ॥

नन्वस्माद्धेतोर्भवतु परमेश्वरात् तेषां भिन्नत्वमन्योन्यतस्तु कथं भेदो बोधरूपस्य व्यापित्वनित्यत्वकृतस्य च देशकालाभेदस्य समानत्वात्[२५]; अन्योन्यभेदाभावे च 'निर्मितास्ते' इति कथं बहुवचनम्? इत्याशङ्कां व्यपोहति

बोधादिलक्षणैक्येऽपि
तेषामन्योन्यभिन्नता ।
तथेश्वरेच्छाभेदेन
ते च विज्ञानकेवलाः ॥ ७ ॥

इह हि सर्वत्राप्रतिहतशक्तिः परमेश्वर एव तथाबुभूषुस्तथा तथा भवति, नत्वन्यः कश्चित् परमार्थतोऽस्ति, — इत्यसकृदुक्तम्[२६]; ततश्च

---

पं० ७ ग० पु० भावेपि चेति पाठः ।

---

२५ देशकालभेदस्य बोधस्वभावं प्रत्यभेदकत्वात् ।

२६ भेदश्चेत् कथं बोधादिरूपता सा चेत् कथं भेद इति भेदे परस्परं बोधादिलक्षणैक्येऽपि पर्यनुयोगोऽत्र नैव संभवतीति तथेश्वरेच्छासामर्थ्यात् ।

व्यापकनित्यबोधस्वभावोऽपि 'अहं भेदेन निर्भासे' इत्येवंभूतेनेश्वरेच्छाविशेषेण तेषां शरीरादिशून्यान्तप्रमातृपदोत्तीर्णानां बोधत्वनित्यत्वविभुत्वादिधर्मजातस्यैक्येऽप्यन्योन्यं भेदः; ते च शास्त्रे विज्ञानकेवलौ[27] उक्ताः। तत्र विज्ञानकेवलो मलैकयुक्तः, — इत्यादौ 'विज्ञानं' बोधात्मकं रूपं 'केवलं' स्वातन्त्र्यविरहितमेषामिति ॥ ७ ॥

एवं 'स्वातन्त्र्यहानिर्बोधस्य' इत्यस्य भागस्य विज्ञानाकलविषयतामुक्त्वा 'स्वातन्त्र्यस्याप्यबोधता' इत्यमुमंशं विषयप्रदर्शनेन स्पष्टयति

शून्याद्यबोधरूपास्तु
कर्तारः प्रलयाकलाः।

---

२७ नित्यव्यापकबोधमात्ररूपोऽप्यहं भेदेन निर्भासे इति ततस्तेषां युक्त एवान्योन्यं भेदो ग्राह्येभ्यो ग्राहकान्तरेभ्यश्च ते च शास्त्रे विज्ञानमात्रं कर्तृताशून्यं मायीयभेदावभासशून्यं चैषां स्वभाव इत्येवं विज्ञानाकला इत्यर्थः। न च वाच्यं यदीश्वरेच्छा बोधमात्राण्यपि भेदवन्ति करोति तर्हि बोधस्यैव प्रमातृत्वं भिन्ने घटादिवर्गे सर्वदा निरूप्यतां किं शून्यादिदेहान्तान्तरालप्रमात्रन्तरकल्पनेनेति यत उक्तमसकृदवभासमानमनपह्नवनीयमिति। अवभाति च कृशोऽहं क्षुधितोऽहं सुखितोऽहं सर्वोत्तीर्णोऽहमिति।

**तेषां कार्मो मलोऽप्यस्ति**
**मायीयस्तु विकल्पितः ॥ ८ ॥**

शून्ये जडत्वादबोधरूपे एव, यदि वा प्राणे बुद्धौ वा येषाम् अहमिति चमत्कारयोगात् कर्तृत्वं ते प्रलयेन कृताः 'अकलाः' कलातत्त्वोपलक्षितकरणकार्यरहिता अबोधरूपाः कर्तारश्च । प्रलयावधि हि ते तथाभूता उत्तरकालं तु कार्यकरणसंबद्धा एव भवन्ति; यतस्तेषां न केवलमुक्तरूप आणव एव मलो यावत् कार्मोऽपि वासनासंस्काररूपो धर्माधर्मात्मास्त्येव । यद्येवं, भिन्नवेद्यप्रथाप्येषां स्यात् । सत्यम्, सवेद्यरूपे सुषुप्तपदे, ऽपवेद्ये तु न भवति; तेन मायीयो मल एषां विकल्पितो व्यवस्थितविषयत्वेन । तथा हि—केऽपि शून्यादिभागविश्रान्ता गाढनिद्राजडीकृता अपवेद्यसुषुप्तपदभाजः । अन्ये तु बुद्ध्यादिनिष्ठाः सुखदुःखावशेषसामान्यात्मकभिन्नवेद्यसंवेदनयोगिनः सवेद्यसौषुप्तपदलीनाः । स्थूलदेहेन्द्रियात्मककार्यकरणवियोगरूपत्वं तु प्रलयाकललक्षणं सर्वेषां तुल्यम् ॥ ८ ॥

एवं 'स्वातन्त्र्यस्याप्यबोधता' इत्येवमंशः स्फुटीकृतः, प्रसङ्गाच्च कार्ममलस्य विषयो दर्शितः, मायामलस्य च पाक्षिकत्वमुक्तम्। अधुना पुनराणवकार्ममलद्वयाभावेऽपि शुद्धोऽस्ति मायाख्यस्य मलस्य विषयः,—इति दर्शयति

बोधानामपि कर्तृत्व-
जुषां कार्ममलक्षतौ।
भिन्नवेद्यजुषां माया-
मलो विद्येश्वराश्च ते॥ ९॥

ये चिन्मात्रमेवात्मतया पश्यन्ति 'अहम्' इति च चमत्कारोल्लासात् कर्तारस्[28]तत एव सर्वज्ञाः सर्वकर्तारश्च ते विद्येश्वराः। किन्तु तनुकरणभुवनादि यदेषां वेद्यतया कार्यतया च भाति, तत् कुविन्दपटदृष्ट्या भिन्नमेव सत्,—इत्यस्ति विद्येश्वराणां मायाख्यमल[29]योगः॥ ९॥

---

२८ अप्रतिहतज्ञानक्रिया इत्यर्थः। अप्रतिहतज्ञानक्रियात्वे चाणवमलाभाव इति स्वत एव सिद्धम्। संसारोत्तीर्णत्वात् कर्मसंसारविकलाश्च।

२९ अत एव च द्वैतदर्शनाङ्गीकृतेश्वरतुल्यास्त इति बोध्यम्।

अथ मलत्रयस्यापि यौगपद्येन यो विषयस्तं दर्शयितुमाह

देवादीनां च सर्वेषां
भविनां त्रिविधं मलम्।
तत्रापि कार्ममेवैकं
मुख्यं संसारकारणम्॥ १०॥

इह विद्येश्वरविज्ञानाकलास्तावन्न भविनो मायान्ताध्वातिक्रमणात्; प्रलयाकला अपि [30] कंचित्कालमविद्यमानभवाः। ये त्वेते मायातत्त्वान्तरालपरिवर्तिनो देवादयः स्थावरान्ताश्चतुर्दश[31]धा शास्त्रेषु परिगणितास्ते सर्वे 'भविनः' संसारिणः, तेषां च त्रयोऽपि युगपन्मलाः। ननु मलत्रयमध्ये कतमो मलः संसरणमेषां संपादयेत्? आह, 'तत्रापि' तेषु

---

३० प्रलयावधि।

३१ यदुक्तम्।

'अष्टविकल्पो दैवस्तैर्यग्योनश्च पञ्चधा भवति।
मानुष्यश्चैकविधः समासतो भौतिकः सर्गः॥'

इति चतुर्दशविधत्वम्।

त्रिष्वपि सत्सु कार्मं मलं मुख्यतया संनिपत्य संसरणे कारणम् । यथोक्तम्

'कर्मतस्तु शरीराणि विषयाः करणानि च[३२] ।'

इति । [३३]तनुकरणविषयसंबन्ध एव च वर्तमानो भविष्यंश्च, — इत्यनवरतं प्रबन्धतो वर्तमानः संसरणमुच्यते । आणवमायामलौ तु यद्यपि न कारणं संसारे, तथापि कार्मेण विना तौ देहादिविचित्रभावाभिनिर्वर्तनशक्तिशून्यौ विज्ञानाकलादिषु, — इति मुख्यं कार्ममेव मलं संसारकारणं तत्र तत्र शास्त्रे गण्यते । अत एव तदुपक्षये[३४] वृत्ते दत्तस्तावद्संसरणसोपानपदबन्धः, — इत्याशयेन कर्मबन्धाभिमानपरिहानिरेव यत्नतः सांख्यपुराणभारतादिशास्त्रेषूपदिश्यते । एवं मलत्रयस्यैकैकभेदैस्त्रिभि-

३२ अत्र च देहेन्द्रियरूपशक्तिवैचित्र्यमित्यर्थः ।

३३ तथापि किमित्यत आह तनुकरणेति ।

३४ तदुपक्षयश्च केवलं दीक्षयैव भवति । सा हि पूर्वकृतकर्मवह्न्याः शोषणम् अपराधिरोहणविरोधिकर्मशमनं च विदधातीति न दीक्षासमं किंचिदिति । गुरुभिरप्युक्तम्

'कृतमपि फलाय न स्याद्दीक्षोपर्यूषरोप्तबीजमिव ।
फलवद्विशेषशास्त्रव्यतिकरजातं विहायैकम् ॥'

इति । तस्यैवौत्कर्ष्यख्यापनार्थं सांख्यपुराणादीत्युक्तम् ।

द्विभेदैस्त्रिभिस्त्रिभेदेनैकेन, — इति सप्त प्रमातार उत्तिष्ठन्ति । तथा च शास्त्रे

'शिवादिसकलान्ताश्च शक्तिमन्तः सप्त ।'

इत्युक्तम् । तत्राप्यवान्तरभेदेन गुणमुख्यताभेदेन विकल्पसमुच्चयतादिभेदेन चानन्तप्रकारत्वमिति[३५] ॥ १० ॥

अस्य च मलत्रयस्योद्भवतिरोभावभेदात् संसारिणां प्रकारद्वयम्[३६], — इति दर्शयति

कलोद्बलितमेतच्च
चित्तत्त्वं कर्तृतामयम् ।
अचिद्रूपस्य शून्यादे-
र्मितं गुणतया स्थितम् ॥ ११ ॥
मुख्यत्वं कर्तृतायाश्च
बोधस्य च चिदात्मनः ।

---

३५ मलत्रयस्य य एकैको मलः, तद्भेदैस्त्रिभिर्मायाकृतैः शिवमन्त्रमहेश्वरमन्त्रेश्वरैः प्रमातृभिः । द्वयोर्मलयोर्भेदैः कृतैस्त्रिभिः प्रमातृभिर्मन्त्रविज्ञानाकलप्रलयाकलैर्मायीयाणवकृतैः, मन्त्रे मायया भेदः, विज्ञानाकले आणवेन, प्रलयाकले आणवमायामलाभ्यां प्रमातृभेदः । कार्मस्तु संस्काररूपत्वान्नादरास्पदम् । त्रिभेदेनैकेन त्रयाणां मलानां भेदेनैकेन सकलरूपेण सप्त प्रमातारस्तिष्ठन्ति । सकलेष्वपि विकल्पसमुच्चयाद्यङ्गाङ्गितादिना चासंख्यो भेदः ।

३६ मलत्रययौगपद्यलक्षितभवितात्मकसकलावस्थाया एव द्वैधमिति ।

**शून्यादौ तद्गुणे ज्ञानं**
**तत्समावेशलक्षणम् ॥ १२ ॥**

एतच्चेति, यत् त्रिदशादीनां भाविनां चैतन्यं कर्तृतांशस्य[37] प्राधान्यान्मलेन संविद्भागस्य निमज्जितत्वात्[38] कर्तृतामयं चिद्रूपस्य तत्त्वं स्वातन्त्र्यं कलाख्येन[39] परमेश्वरशक्त्यात्मना तत्त्वेन 'उपोद्वलितम्' अनुप्राणितं मलेन न्यक्कृतं सदुद्बोधितं शून्यादेर्देहपर्यन्तस्य मायाप्रमातुः संबन्धि, तत् 'गुणत्वेन अप्रधानत्वेन स्थितं, यतो 'मितम्' इदन्तापन्नदेहादिशून्यान्तप्रमेयभागनिमग्नत्वात् प्रमेयं, यो गौरो, यः सुखी, यस्तृषितो, यः सर्वरूपरहितः सोऽहम्, — इति हि इदन्तैवान्तर्लीनाहंभावा संसारिणां परिस्फुरति । सेयं जाग्रत्स्वप्नसुषुप्तरूपा संसारावस्था । यदा तूक्तगुरूपदेशादिदिशा तेनैवाहंभावेन स्वातन्त्र्यात्मना व्यापकत्वनित्यत्वादि-

---

३७ किंचित्कर्तृत्वरूपस्य ।

३८ मलापहस्तितबोधस्वरूपत्वात् ।

३९ ननु च मलेन संविद्भागश्चेन्निमज्जितस्तर्हि कर्तृतामयं स्वातन्त्र्यं कथमुन्मज्जितं भवति । तथात्वे हि सति एकस्यैव द्वैधमापन्नमित्यत आह कलाख्येनेति ।

धर्मपरामर्शमात्मनि विदधता ततः शून्यादेः प्रमेयादुन्मज्ज्येवास्यते तदा तुर्यातीतावस्था । यदापि परामृष्टतथाभूतवैभवनित्यैश्वर्यादिधर्मसंभेदेनैवाहंभावेन शून्यादिदेहधात्वन्तं सिद्धरसं[४०]योगेन विध्यते, तदास्यां तुर्यदशायां तदपि प्रमेयतामुज्झतीव । सेयं द्वय्यपि जीवन्मुक्तावस्था 'समावेश' इत्युक्ता शास्त्रे । सम्यगावेशनमेव हि तत्र तत्र प्रधानं, तत्सिद्धये तूपदेशान्तराणि । यथा गीतम्

'मय्यावेश्य मनो ये मां ।' ( गी० १२।२ )

इति

'अथावेशयितुं चित्तं ।' ( गी० १२।९ )

इत्यादि च । समावेशपल्लवा एव च प्रसिद्धदेहादिप्रमातृभागप्रह्वीभा[४१]वभावनानुप्राणिताः परमेश्वरस्तुतिप्रणामपूजाध्यानसमाधिप्रभृतयः कर्मप्रपञ्चाः । यद्गीतमपि

---

४० यथा हि सिद्धरसेन धातुमयं विगाल्यते तथाहंभावेन शून्यादिदेहान्तं विगाल्यते येन प्रमेयत्वात् तत् च्यवत इव । यदापि विद्धोऽसौ देहप्राणादिधातुः संविद्रसेनाभिनिविष्टोऽत्यन्तं कनकधातुरिव जीर्णः क्रियते येन स द्रुतरस इवाभाति केवलं तत्संस्कारस्तदापि तुर्यातीतदशा सा भवतीति च बोध्यम् ।

४१ प्रह्वीभावः स्वात्मगुणीकरणं परमेश्वररूपप्रधानतापादनतत्त्वम् ।

'अभ्यासेऽप्यसमर्थः सन्मत्कर्मपरमो भव।' (गी० १२।१०) इति। देहपाते तु परमेश्वर एवैकरसः,—इति कः कुत्र कथं समाविशेत्[४२]। तदेतदाह—

यत् पुनः कर्तृतायाः मुख्यत्वं तन्नान्तरीयकश्च शून्यादेर्गुणभावः, तस्मिंश्चाप्यचिद्रूपे गुणीभूते 'स्वातन्त्र्यस्याप्यबोधता' इति मलव्यापारस्यापहस्तनात् चितो योऽपरोऽप्यात्मभागो बोधलक्षणो मलेन न्यक्कृतोऽभूत् तस्यापि अधुनोन्मग्नत्वेन मुख्यत्वम्। यच्च कर्तृतायाः 'मुख्यत्वम्' उन्मग्नता, इदमेव ज्ञानमज्ञानात्मकमलप्रतिपक्षत्वात्; तदेतन्मुख्यत्वं समावेशस्य लक्षणं येन देहस्थितोऽपि 'पतिः' इति 'मुक्त' इति शास्त्रेषूक्तः॥ १२॥

नन्वेवं पत्युः समावेशात्मिका तुर्यतदतीतरूपा भवतु दशा, पशोस्तु कथं सुषुप्तस्वप्नजाग्रद्दशाभेद आगमेषूक्तः,—इत्याशङ्क्य सुषुप्तस्वरूपमेव तावदाचष्टे श्लोकत्रयेण

४२ तदा समावेशादिव्यवहारोऽपि न कश्चिदित्यर्थः।

[४३]शून्ये बुद्ध्याद्यभावात्म-
न्यहन्ताकर्तृतापदे ।
अस्फुटारूपसंस्कार-
मात्रिणि ज्ञेयशून्यता ॥ १३ ॥

[४४]साक्षाणामान्तरी वृत्तिः
प्राणादिप्रेरिका मता ।
जीवनाख्याथवा प्राणेऽ-
हन्ता पुर्यष्टकात्मिका ॥ १४ ॥

तावन्मात्रस्थितौ प्रोक्तं
सौषुप्तं प्रलयोपमम् ।
सवेद्यमपवेद्यं च
मायामलयुतायुतम् ॥ १५ ॥

इह चित्तत्त्वं स्वस्वरूपमाच्छादयत् ज्ञेयरूपेण बुद्ध्यादिना देहान्तेन घटादिना वा भा-

---

४३ या हि दशा बोधावरोहणक्रमतारतम्येन दर्शितास्तासां रूपं वाच्यमित्याशयं गृहीत्वा तुर्यावरोहानन्तरभावित्वात् सुषुप्तस्य श्लोकत्रयेण सुषुप्तावस्थालक्षणकथनं, तत्र प्रथमे तावदस्याः पीठबन्धं करोति शून्य इति ।

४४ शून्यप्रमातुरेव वक्तव्यशेषमाचक्षाणो द्वितीयां सुषुप्तभूमिकां करोति साक्षाणामिति ।

सते। एकमेव चेदं स्वातन्त्र्यविजृम्भितं, न त्वत्र वास्तवः क्रमो वा भेदो वा। तत्रापि तु स्वातन्त्र्यात् क्रमश्च भेदश्चाभासते। तदेवं-स्थिते यश्चित्तत्त्वस्य स्वरूपाच्छादनभोगः[४५] स एवोत्तरभागान्तरासंकीर्णो यदा विश्राम्यति तदनुदयाद्वा तत्प्रध्वंसाद्वा प्रलय इव तदनादरणाद्वा निद्रासमाधिमूर्च्छादाविव, तत्रैव चाहन्तारूपं कर्तृतायाः पदं परामर्शोऽस्फुटत्वाद[४६]रूपात्मना संस्कारेण शुद्धेन वेद्यपदवी-मप्राप्तेन युक्तो भवति, तदा सैवावस्था नेत्येवपरामर्शशेषा अनपेक्षितनिषेध्यबुद्ध्यादि-विषयसुस्पष्टपरामर्शसंभेदापि अवश्यंभाविनि-षेध्ययोगात् 'अकिञ्चनोऽहम्' इत्येवंभूतपराम-र्शवत् स्वीकृतसामान्याकारानिषेध्या, अत एव संस्कारशेषीकृतज्ञेयरूपा 'शून्य' इ[४७]त्युच्यते।

---

४५ देहबुद्ध्यादिना संयोगः।

४६ लोकप्रसिद्धरूपाभावात्।

४७ शून्य इति। अत्रेदं फलितम्—बोधमात्रमेव संकुचितं शून्य-मिति। शून्यरूपता तु न स्फुटवेद्यरूपेति। तत एवोक्तं स्पन्दसूत्रेषु

'ज्ञानज्ञेयस्वरूपिण्या शक्त्या परमया युतः।
पदद्वये विभुर्भाति तदन्यत्र तु चिन्मयः॥'

इति जाग्रत्स्वप्नपदयोर्वेद्यसद्भावः स्फुटः कथितः। सुषुप्ततुर्ययोः पुनस्त-

तथाविधे बुद्ध्यादीनां देहादिनीलान्तानामभावरूपे शून्यत्वमुच्यते, यतस्तत्र ज्ञेयानां 'शून्यता' अभावरूपता संस्कारशेषता[४८]। इयमेव हि सर्वत्राभावो न तु सतां सर्वात्मना विनाशः । [४९]तत्रैव शून्ये प्रमातरि समवेता प्राणापानसमानोदानव्यानात्मके वायुचक्रे प्रेरणात्मिका शक्तिः, सा च विद्याकलयोः प्रपञ्चभूतौ यौ क्रमेण बुद्धीन्द्रियकर्मेन्द्रिय-

---

दभावाच्चिन्मयत्वं । तदयोगादिहायं विभागः—शिवतत्त्वे ईश्वरान्ते शुद्धसंविल्लक्षणे यदहमिदमिति स्फुरितं तत्रैवेदन्तोल्लसन्ती संविदो भावानां चान्योन्यं भेदनरूपं निषेधं तावदाक्षिपति । तत्र निषेधस्य गुणतायां संविदः प्राधान्येन प्रमातृतायां मन्त्रमहेशता विज्ञानाकलता च विमर्शयोगायोगाभ्यां, निषेधप्राधान्ये शून्यप्रमातृभावप्रधानतायां सकलतेति ।

४८ अमुमेवाशयमागमोऽप्याह

'अशून्यः शून्य इत्युक्तः शून्यश्चाभाव उच्यते ।
अभावः स तु विज्ञेयो यत्र भावाः क्षयं गताः ॥'

इति । अत एव संस्कारशेषतेत्युक्तम् । भावान्तरे भावान्तराणां सर्वत्राभाव उच्यते कार्याणां भूततन्मात्राणां करणानां च त्रयोदशानामभावेन सर्वाभाव उक्तः ।

४९ तृतीयश्लोके सुषुप्तस्वरूपं निर्वाहयिष्यते, तत्र प्रथमसुषुप्तस्य भूमिका रचिता, द्वितीयसुषुप्तस्य रचयति तत्रैवेति द्वितीयश्लोकव्याख्यानेन ।

वर्गौ तयोरान्तरी वृत्तिः । बाह्या[50] हि तयोः शब्दाद्यालोचनशब्दाभिव्यक्तिस्थानाभिहननादिका वृत्तिः । तदुक्तम्

'सामान्यकरणवृत्तिः प्राणाद्या वायवः पञ्च ।' (सां० २९ का०)

इति । एवं शून्य[51] एवाहन्ता अक्षचक्रोपोद्बलिता जीवनम्,–इति स शून्य एव जीवः संसरति । यदि वेन्द्रियशक्तीनामेव यान्तरी साधारणप्राणनात्मिका[52] प्राणशब्दवाच्या प्राणादिमारुतविशेषप्रेरणामयी सैव 'अहम्' इत्यधिशयाना जीवनं, तदा प्राण एव जीवः

---

५० बाह्यविषयालोचनविशेषनिर्माणलक्षणातो बाह्यवृत्तेः प्रत्येकमसाधारणरूपाया विलक्षणा । कथमित्याह बाह्या हि इति । अत एवोक्तं प्राणापानेति । ततश्चायमर्थः सैवेयमान्तरी वृत्तिर्यया वायुरेकः प्राणापानादिक्रियापञ्चकप्रपञ्चितः पञ्चकतामभ्येतीति ।

५१ सैव प्रेरणात्मिका शक्तिरूपान्तरी वृत्तिः, यतोऽक्षवर्गस्य जडस्य जीवनलक्षणां वृत्तिं

'यतः करणवर्गोऽयं विमूढोऽमूढवत्स्वयम् ।
सहान्तरेण चक्रेण ·············· ॥'

इति रीत्या स्वावेशवशादुत्थापयन्ती जीव इत्युच्यते इत्याह शून्य एवेत्यादि । सा च तथाभूता या वृत्तिस्तस्य शून्यस्य तथोत्थापिका सा जीवनक्रियेत्युक्तं जीवनमिति । अत्र पक्षे पूर्वसूत्राच्छून्य इत्यनुवर्त्य शून्ये याहन्ता सा प्राणादिहेत्वन्तराक्षवृत्तिकारणभूता सती जीवनम् ।

५२ प्राणनादिक्रियोत्थापिका । तेन सा परमार्थतः कर्तुरेव वृत्तिर्न जडानामिति सैव जीवनम् । पूर्वत्र शून्यो जीव इह प्राण इति तात्पर्यम् । उभयोरपि चायं योन्यन्तरसंचारी पुर्यष्टकशब्दवाच्य इत्याह प्राणश्चेति ।

संसारी स एव शून्यः, प्राणश्च पुर्यष्टकशब्दवाच्यः; प्राणादिपञ्चकं बुद्धीन्द्रियवर्गः कर्मेन्द्रियगणो निश्चयात्मिका[५३] च यतो धीर्व्यज्यते। तन्मात्रपञ्चकं मनोऽहंबुद्धय, इत्यन्ये

'तन्मात्रोदयरूपेण मनोऽहंबुद्धि०।' (स्प० ४।१९)

इति।

'भूमिरापोऽनल०।' (गी० ७।४)

इति च वदन्तः। एवं य[५४]दुभयात्मकं पुर्यष्टकं तावत्येव शुद्धे या विश्रान्तिः, तस्यां सत्यां यदहन्तायाः सुषुप्ताया बोधलक्षणं भावरूपं कर्म च[५५] क्रियास्वभावं तत् सौषुप्तम्। मलेन[५६] हि प्रमाता सुप्तः कलया त्वसुप्त इव, अत्र तन्निमज्जनेन सुष्ठु सुप्तस्तस्य भावः कर्म वा,—इति। तत्र शून्यसौषुप्ते न किञ्चिद्याति-

---

५३ स्वीकृतान्तःकरणान्तरेति शेषः।

५४ एवं यत्सिद्धये भूमिकाद्वयं सूत्रद्वयेन समर्थितं तदिदानीं सुषुप्तं समर्थयितुं सूत्रान्तरमवतारयत्येवमित्यादिना। तावत्येव शून्यतामात्र एव प्राणे।

५५ भावः प्रवृत्तिनिमित्तात्मा तावदवभासः। कर्म तावद्विमर्शात्मकम्।

५६ कथं सुषुप्ततेत्यवतारयति मलेनेति। कलयेत्युपलक्षणं तेन विद्यापीति बोध्यं, तन्मूलत्वात्तस्या इति वा बोध्यम्।

रिक्तं वेद्यम्,–इति मायीयमलाभावादपवेद्यं तत्; प्राणसुषुप्ते तु स्पर्शकृतस्य सुखदुःखादेर्भावात् मायाख्यमस्ति मलम्,–इति सवेद्यं तत् । एवं गाढागाढसुषुप्तद्वितयवत् प्रलयोऽपि मन्तव्यः । स परं देहादिप्रध्वंसानुदयकृतश्चिरतरकालश्च । सुषुप्तं तु देहाद्यनादरकृतमचिरकालं च,–इति विशेषः । तत्रापि श्रमकृतं निद्रा, धातुदोषकृतं मूर्च्छा, द्रव्यकृतं मदोन्मादादि, स्वातन्त्र्यकृतं समाधिः,–इत्याद्यवान्तरभेदाः । केचित्तु समाधिरूपं सवेद्यमन्यदपवेद्यम्,–इति प्रपन्नाः ॥ १५ ॥

नन्वेवं स्फुटवेद्यपदविनिर्मुक्ता सुषुप्तावस्थास्तु, स्वप्नजाग्रद्दशयोस्तु स्फुटवेद्यावभासयोगिन्योः को भेदः? इत्याशङ्क्य श्लोकद्वयेन भेदमाह

---

५७ मायीयेति, रूपवतः स्फुटस्य वेद्यस्याभावाद्विद्याकले भिन्नं वेद्यं निर्मेयं च प्रथयन्त्यावपि स्वरूपमावृणुत एव संवित्तत्त्वस्येत्यावरणांशेन मायाख्यमलत्वं तयोरित्यर्थः ।

५८ तत्र देहाद्यनादरणे ।

५९ द्रव्येण मद्यगरोपयोगादिना । स्वातन्त्र्येति स्वातन्त्र्योत्थापितात्प्रयत्नबलात् ।

मनोमात्रपथेऽप्यक्ष-
विषयत्वेन विभ्रमात् ।
स्पष्टावभासा भावानां
सृष्टिः स्वप्नपदं मतम् ॥ १६ ॥

सर्वाक्षगोचरत्वेन
या तु बाह्यतया स्थिरा ।
सृष्टिः साधारणी सर्व-
प्रमातॄणां स जागरः ॥ १७ ॥

बाह्येन्द्रियाधिष्ठानानि चक्षुर्गोलकादीनि[६०] निमीलितानि निद्रायमाणस्य लक्ष्यन्ते, न च तेषु निमीलितेषु बाह्येन्द्रियग्रहणव्यापारो दृष्टः, तेन शुद्ध एव मनोमार्गे रूपस्पर्शादयो भावा अक्षग्रहणसमुचितेन[६१] स्पष्टेन वपुषा भासनयोग्याः परमेश्वरेण सृज्यन्ते, न त्वणुना अनिष्टस्यैव दर्शनात्, इष्टस्यापि

६० आदिना पञ्चाङ्गुलादीनि अधिष्ठानानि निस्तिमितानि ।

६१ अथ च चक्षुषा कान्तां पश्यामि, हस्तेनाकारयामीति स्पष्टावभासा तात्कालिकैश्वरसृष्टिप्रधाना प्रतिपत्तिरस्तीत्याह अक्षग्रहणेति । मनोमात्रमपि अत्र पुर्यष्टकांशताव्यवस्थितेन्द्रियविषयभागबीजतानुविद्धं बोद्धव्यम् ।

देशकालान्तरादियोगेन । अत एव मनोमात्रस्थितत्वादेव न प्रमात्रन्तरसाधारणीयं सृष्टिः । यत्तु तत्र बाह्येन्द्रियविषयत्वं प्रमात्रन्तरसाधारण्यं चकास्ति, तद्यद्यपि यावद्भाति तावत् तथैव, तथाप्युत्तरकालं प्रबुद्धस्य न तथा,—इति परामर्शेन तद्रूपं निर्मूलत्वेनावभाति,—इति भ्रान्तम् । यानि हि प्रमात्रन्तराणि स्वप्ने स्वेन्द्रियाणि च भान्ति, एतानि प्रबोधकालभाविभिरेव तैरभिन्नानि,—इति निश्चयः, प्रबोधकाले च न तथा,—इति निश्चयानुवृत्तिरपहृतैव । तेनोभयमपि भ्रान्तमुच्यते; भ्रान्तत्वमेव चास्थैर्यम् । एवमिन्द्रियाविषयत्वेनैवासाधारणत्वमाक्षिप्तम्,

'विभ्रमेणैव चास्थैर्यं ............ ।'

इति स्वकण्ठेन, तत् जाग्रत्प्रतियोगिधर्मनिरूपणावसरेऽपि न दर्शितम्। एवंभूता या सृष्टिः सा पशोः स्वप्नसमये भावात् 'स्वप्नपदं' स्वप्नकाले विषयः,—इति तथाभूतविषयं प्रमातृत्वं पशोः स्वप्नावस्था,—इति यावत् । अक्षग्रहणं बाह्ये-

न्द्रियदशकस्योपलक्षणम् । यत्र तु बाह्याक्षविषयं सर्वप्रमातृसाधारणत्वं च निश्चयानुवृत्त्या बाधारहिततया परमार्थत्वेन चकास्ति, तत एव स्थैर्यं विषयस्य सा सृष्टिः पशोः जागरः; तद्विषयं प्रमातृत्वं जागरावस्था,—इति यावत् । यावच्चानुवृत्तिस्थैर्यं निश्चयस्य चकास्ति, तावज्जागरः । तन्मध्य एव च निश्चयानुवृत्तिनिर्मूलनात् स्वप्नः,—इत्यवभाससारत्वात् वस्तूनां; स्वप्नेऽपि दीर्घे यत्र स्वप्नान्तरं, स तदपेक्षया जाग्रदेव; जाग्रदभिमतमपि वा दीर्घदीर्घं कालान्तरे निश्चयानुवृत्तिनिरोधाज्जाग्रदन्तरापेक्षया स्वप्न एवेति मन्तव्यम् ॥ १७ ॥

आसां तिसृणां हेयत्वप्रदर्शनेन तुर्यावस्थातः प्रभृत्युपादेयत्वं सूचयति

हेया त्रयीयं प्राणादेः
प्राधान्यात्कर्तृतागुणे ।
तद्धानोपचयप्राय-
सुखदुःखादियोगतः[६२] ॥ १८ ॥

---

६२ अयं संक्षेपेण सूत्रार्थः—कर्तृतात्मन्यप्रधानीकृते प्राणादेस्तदपेक्षया प्राधान्येन हेतुना तस्य स्वातन्त्र्यभागस्योपचयबलोदितसुखदुःखविषयहानादानादिपरिश्रमान्तरैस्त्रयीमपि दशां मुमुक्षुर्हेयत्वेनाभिमन्येतेति ।

यत्रायं प्रमाता त्यागोपादानतदिच्छाप्रयत्नादिकं परिक्लेशं पश्यति, तदेवास्य हेयतया भाति । स चास्य सुखदुःखयोगवैचित्र्येणैव कृतः, तच्चैतदवस्थात्रये संभवति; यतः कर्तृतारूपं स्वात्मविश्रान्त्यानन्यौन्मुख्यलक्षणमानन्दैकघनं यच्चिन्मयं वपुः, तद्यदा प्राणादिवृत्तिशून्यपुर्यष्टकदेहादिभूमिषु गुणतामभ्येति, तदा तस्मिन् गुणीभूते प्राणादेः प्राधान्यं स्फुरति । तथा[६३] च तस्य चिद्रूपस्य यथायथा हानिस्तथातथा दुःखोपचयो, यथायथा किञ्चिदुन्मज्जनं तथातथा सुखोपचयः । तथाहि—बुभुक्षाकाले प्राणस्यैवोद्रेकात् दुःखं, तृप्तौ तस्य न्यग्भावादहन्तोद्रेके सुखम् । एवं श्रान्तस्य मर्दनामर्दने देहप्राधान्याप्राधान्ये मन्तव्ये । यस्तु समावेशतत्त्वज्ञस्तस्य तत्तत्काले दुःखानुदय एव । यदाह

'दुर्बलोऽपि तदाक्रम्य यतः कार्ये प्रवर्तते ।
आच्छादयेद्बुभुक्षां च तथा योऽतिबुभुक्षितः ।'(स्प० ४।८)

६३ अयमत्राकूतशेषः—यद्यपि च स्वात्मनः स्वातन्त्र्यमेव तथाभासनं तथा चोद्रिक्ततैव, न काचित् सत्यतः कर्तृतागुणता, तथाधुनातनसंसारिणां तदविषयत्वमेव क्रीडाप्रस्तुतदारकमध्यवर्तिराजवदिति चोक्तं तद्धानोपचयेत्यनेन ।

इति । एवं प्राणादेः प्राधान्ये कर्तृताया गुणभावे सुखदुःखवैचित्र्यशतयोगः प्रयासभूमिः,—इति जाग्रत्स्वप्नसुषुप्ते प्राणादिप्राधान्यं कर्तृतान्यग्भावश्चास्ति,—इति तत् त्रयमेव हेयम् । कर्तृताप्राधान्योन्मेषात्तु तुर्यरूपात्प्रभृति तत्स्थैर्यात्मकतुर्यातीतदशान्तमुपादेयम्, एकरसानन्दघनस्वभावलाभे उपादित्साजिहासावैवश्यपरिश्रमप्रशमात्,—इति तात्पर्यम् ॥ १८ ॥

ननु प्राणादिप्राधान्यं हेयतायां कारणमुक्तं तच्चेज्जाग्रदादित्रय एव, तर्हि तुर्यादौ तदभावात्[६४] तत्समावेशे व्युत्थानानुपपत्तिः,—इति श्लोकद्वयेन शङ्कां परिहरति

प्राणापानमयः प्राणः
प्रत्येकं सुप्तजाग्रतोः ।
तच्छेदात्मा समानाख्यः
सौषुप्ते विषुवत्स्विव ॥ १९ ॥

६४ प्राणाद्यभावात् । देहपात एव वा स्यात् ।

मध्योर्ध्वगाम्युदानाख्य-
स्तुर्यगो हुतभुङ्मयः।
विज्ञानाकलमन्त्रेशो
व्यानो विश्वात्मकः परः॥२०॥

'प्राण' इति प्राणनरूपा जीवनस्वभावा[६५] येयं चिद्रूपस्य स्थितिः, सा तावत्सामान्यपरिस्पन्दरूपा, देहप्राणादेरचेतनस्य चेतनायमानतासंपादनात्मिका 'अहम्' इति स्वातन्त्र्यारोपसारा सती विकल्परूपपरामर्शमयी सैव प्राणादिविशेषात्मना पञ्चरूपतां भजते। तत्र किञ्चिज्जहती क्वचित्पतन्ती च प्रश्वासनिःश्वासरूपा क्रमेण प्राणत्वमपानत्वं च विशेषं दर्शयति। तदिदं विशेषद्वयं जाग्रति तावत् स्फुटमेव देहात् प्रसृत्य विषये विश्रान्तेः, ततोऽपि देहे; स्मृत्यादौ वाभ्यन्तरे वेद्ये विश्रान्तेः प्राणापानयोः सुस्पष्टत्वात्। स्वप्नेऽपि तद्द्वयमस्त्येव; स्वपतोऽपि हि प्राणापानौ निर्गमप्रवेशात्मानौ स्फुटमेवापरेण लक्ष्येते। स्वयमेव च वेद्यसंवेदनात् त्यागोपा-

६५ आन्तरवायुसंचारिता चिद्वृत्तिः।

दानरूपा स्थितिः संवेद्यत एव, तेन प्राणना प्राणापानविशेषद्वयमयी जाग्रति, तथा स्वप्ने; सुप्तं स्वप्नः, तदेव तु यदा सुतरां पुष्टं भवति, तदा सुषुप्तः प्रमाता, तस्येदं सौषुप्तं पदम् । तत् द्विविधम्[६६]अपि समानरूपं विशेषं प्राणीयं स्वीकरोति । सवेद्ये तावत्सुषुप्ते यद्यपि प्राणापानस्पन्दो लक्ष्यते, तथापि तयोर्मध्ये या विश्रान्तिर्हृदयसदने निरिन्द्रिये प्रदेशे तदेव मुख्यतः सुषुप्तमिति । तत्र प्राणापानयोर्यश्छेदो विश्रान्तिः कंचित्कालं तदात्मा सकलरसादिवर्गस्योर्ध्वाधरतिर्यक्षु समानीकरणव्यापारात्मा, तत एव हृत्पद्मविकासदानाद्भुक्तपीतजरणकारी समानो दिनरात्रिरूपयोः प्राणापानयोः कंचित्कालं साम्याद्विच्छेदाच्च विषुवत्कालतुल्यः । विषुं व्याप्तिं समानीकरणमर्हति, — इति, 'तदर्हम्' (पा०सू० ५।१।११७) इति वतिः । उपमाने वतेरेव[६७] चाव्ययत्वम्

६६ सवेद्यापवेद्यरूपतया ।

६७ उपमाने वतेरेवेति । अत्र केचित् स्वरादिष्वेव 'तद्धितश्चासर्वविभक्तिः' इत्यादीनामन्तर्भावात् पुनः कथनं स्वरादौ संज्ञाया अनित्यताकथनार्थमिति । अन्ये कार्यनियमेन तत्कथयन्ति कार्यनियमार्थमिति । ततश्च 'तद्धितश्चासर्वविभक्ति'रित्यत्र असर्वविभक्तिरिति कथनात् यस्मादेव

'उद्वतो निवतः' इति प्रयोगात्; तद्धि न्यायसिद्धं न वाचनिकं, विशेषं वा दिनरात्रितदूनाधिकत्वलक्षणं सुवति प्रेरयत्यविरतम्,—इति शतरि विषुवत्। तत्र च विषुवति विच्छिद्यमानस्य प्राणापानस्य संस्काररूपतया सद्भावः, सैव हि विच्छेदो न तु सर्वात्मना नाशोऽस्ति,—इत्युक्तमसकृत्। ततश्च हानादानयोर्बीजरूपता सुषुप्ते; इयति च सर्वः प्रलयाकलान्तः पशुवर्गः। यदा[६८] तु सा प्राणना वृत्तिर्वामदक्षिणमार्गौ खिलीभावयन्ती मध्यरूपेणोर्ध्वेन प्रवहति, तदा तत्प्रवहणं सकलस्य

असर्वविभक्तिस्तत्रैवाव्ययत्वं, तद्विषयश्च 'तेन तुल्यम्' इति 'तत्र तस्येव' इति च सूत्रद्वयम्। 'तदर्हम्' इति वतेश्च सर्वा विभक्तिरुत्पद्यत एव, यथा विधिमर्हतीति विधिवत् पुरुषः तं विधिवन्तमानय, विधिवता कृतमिति च। अत्र चान्ये एनमपि अव्ययपक्ष एव समर्पयन्ति यथा विधिमर्हति विधिवत्पूज्यते इति विध्यर्हं यथा भवति तथा पूज्यते इत्यर्थः। तदर्थमत्र अन्यथापि व्याचष्टे विशेषं वेति।

६८ तदित्थं सर्वप्रमातृविषयेऽवस्थात्रये प्राणादित्रयस्य प्राधान्यमुक्तं तद्दृढतावशेनैव हि सत्यपि प्रतिक्षणमनेकवेद्यदेहत्वे भावभूतशरीरविभाग आगमेषूक्तः। अधुना लोकोत्तरप्रमातृविषयमुदानव्यानप्राधान्यं दर्शयितुं सूत्रान्तरं विवृणोति यदा त्विति। सा प्राणना वृत्तिरिति। अत्राहुः— प्राणापानयोश्च कथं व्यतिरेकेण तिर्यक्प्रवाह इति तदशक्तं करोति प्राणना वृत्तिरिति। तौ हि प्रवाहौ नष्टावेव कथं प्राणापानौ मध्ये ऊर्ध्वेनैकतापन्नौ प्रवहत इति। ततश्चैव प्राणना वृत्तिः पञ्चधात्वमाप्नोतीति मन्तव्यम्।

भेदस्याभेदसारतादानलक्षणं विलापनमाश्या- नस्येव सर्पिषो विदधती [६९]उदानवृत्तिर्विज्ञानाक- लादारभ्य सदाशिवान्तं, सा च तुर्यात्मिका दशा । मायोर्ध्वे हि विज्ञानाकलाः,—इति ततःप्रभृति भेदगलनं [७०]प्रवर्तते । विलीने तु भेदे सर्ववेद्यराशिरूपतत्त्वभूतभुवनवर्गात्मक- देहव्यापाररूपेण प्राणवृत्तिर्व्यानरूपा विश्वात्म- कपरमशिवोचिता तुर्यातीतरूपा । प्राण एव प्रमाता प्राणापानरूपः समानरूप उदानरूपो व्यानरूपश्च,—इति सामानाधिकरण्यात् वि- ज्ञानाकलश्चासौ मन्त्रश्चासौ वर्गापेक्षया, ईशश्च सदाशिवेश्वररूपो योऽसौ,—इति स उदानः। [७१]एतदुक्तं भवति यद्यपि तुर्यतदतीतयोरप्यस्ति

---

६९ यथा पूर्वं तृतीयनयनोन्मीलनं तथेयमप्युदानवृत्तिस्तृतीयेति । तदुक्तमनेनैवान्यत्र

'ब्रह्मादिकीटान्तमनन्तकं यल्लोकत्रये वेदकचक्रवालम् ।
तद्द्वैतदृष्ट्यैव सुपूर्णमित्थं तदीयचक्षुर्युगलं व्यनक्ति ॥

इत्थं विमृश्याहमनन्तशक्तिविश्रान्तधीर्द्वैतदृशं जिहासुः ।
त्वद्भक्तिसंदर्शितशुद्धमार्गार्गलीभावितभूरिभावः ॥

समं समग्रोद्गतवेदनाख्यबिन्दुस्थनेत्रान्तरशोभमानम् ।
भवन्तमन्तःकृतविश्वरूपमद्वैतदृष्टिं शिव संश्रितोऽस्मि ॥'

इति ।

७० स च भेदं दहन्नग्निकल्प इत्यर्थः । स एव च विज्ञानाकलश्च मन्त्रश्च त्रिविध ईशश्च सदाशिवात्मा चेति ।

७१ परमेश्वरविषयमुक्त्वा जीवविषयमाह एतदिति ।

प्राणना – अन्यथा जीवत्वस्य व्युत्थानस्य चानुपपत्तेः – तथापि भेदोपसंहारेणाभेदविश्रान्तिप्राधान्यादनयोर्दशयोः सुखदुःखादिवैचित्र्यायोगात् एकघनस्वात्मविश्रान्त्यात्मकपरमानन्दमयत्वेनोपादेयतैव । सुषुप्तादौ तु संस्काररूपत्वास्फुटवेद्योल्लासस्फुटवेद्यावभासरूपस्य भेदस्य विद्यमानत्वात् अस्ति सुखदुःखादिवैचित्र्यम्, – इति हेयतैव, – इति युक्तमुक्तं 'हेया त्रयीयम्' इत्यादि । भगवतश्च विश्वशरीरस्य प्राणापानसमानोदानव्यानरूपतयैव सकलगतोल्लासप्रवेशप्रलयाकलविज्ञानाकलादिवर्गसदाशिवरूपता, – इत्यप्यनेन दर्शितम् । यथोक्तम्

'षट्त्रिंशदात्मकं विश्वं शम्भोः प्राणादिशक्तयः ।'

इति ॥ २० ॥ आदितः १७१ ॥

इति श्रीमदाचार्योत्पलदेवविरचितायामीश्वरप्रत्यभिज्ञायां श्रीमदाचार्याभिनवगुप्तविरचितविमर्शिन्याख्यटीकोपेतायामागमाधिकारे प्रमातृतत्त्वनिरूपणाख्यं द्वितीयमाह्निकम् ॥ २ ॥

संपूर्णश्चायमागमाधिकारस्तृतीयः ॥

---

अथ

# ईश्वरप्रत्यभिज्ञायां

श्रीमदाचार्योत्पलदेवविरचितायां

आचार्याभिनवगुप्तविरचितविमर्शिन्याख्य-
टीकोपेतायाम् ।

## तत्त्वसंग्रहाधिकारे

## प्रथममाह्निकम् ।

अनन्तमानमेयादिवैचित्र्याभेदशालिनम् ।
आत्मानं यः प्रथयते भक्तानां तं स्तुमः शिवम् ॥

एवं स्वसंवेदनोपपत्त्यागमसिद्धं महेश्वररू[1]पमात्मस्वरूपं यदधिकारत्रयेण[2] वितत्य निर्णीतं तदेव संक्षेपेण शिष्यबुद्धिषु[3] निवेशयितुमाग-

१ ज्ञानक्रियात्मकशक्त्यप्रतीघातात् ।

२ ज्ञानक्रियागमरूपेण ।

३ स्वभ्यस्तज्ञानज्ञानित्वयोगित्वसिद्धये भावनाद्युपयोगितया । नन्वलं तत्त्वार्थसंग्रहाधिकारेणोपोद्घाताधिकारेणैवैतदर्थस्य संगृहीतत्वात् इत्यत आह शिष्यबुद्धिषु निवेशयितुमिति तेनायमर्थः अनुन्मीलितवैतत्या एवोपोद्घातेनानुगृहीताः, उन्मीलितवैतत्यास्तु पुनः संक्षिप्ततत्त्वार्थाभिलाषिणोऽत्यन्तवैतत्यभीरवोऽपि मध्यमवैतत्याभिलाषिणोऽनेनाधिकारेणेत्यपौनरुक्त्यमिति ।

मार्थसंग्रहं श्लोकाष्टादशकेन दर्शयति 'स्वात्मैव सर्वजन्तूनाम्' इत्यादिना 'उत्पलेनोपपादिता' इत्यन्तेनैकेनाह्निकेन । तत्र श्लोकेन पारमार्थिकं रूपमुक्त्वा श्लोकनवकेन बन्धस्वरूपं प्रमातृ-प्रमेयतत्त्वदर्शनदिशा, सप्तकेन प्रत्यभिज्ञात्मकं मोक्षतत्त्वं, श्लोकेनोपसंहारं दर्शयति,—इति तात्पर्यम् । ग्रन्थार्थस्तु निरूप्यते ।

स्वात्मैव सर्वजन्तूना-
मेक एव महेश्वरः ।
विश्वरूपोऽहमिदमि-
त्यखण्डामर्शबृंहितः ॥ १ ॥

इह जडास्तावच्चेतननिमग्ना एव भान्ति; इदमिति हि जडपरामर्शोऽहमिति संवित्परा-मर्श एव विश्राम्यति; ततश्च जडा निरात्मान इति, जन्तव एव जीवाः सात्मानस्तेषां च महेश्वर एव स्वात्मा स एव महेश्वरो न

४ अखण्डितपदेन ग्राहकस्य ग्राहकान्तरात् ग्राह्यस्य ग्राह्यान्तरान्न वि-च्छेद इति दर्शयति ।

५ आत्मा हि न केनचित् ज्ञायते येन जन्तूनां संबन्धितया येन च तेषामीश्वर इति च कथ्येतेति ।

त्वन्यः[६] कश्चित् । यतः संवित्स्वभावोऽसौ, संविदश्च न देशेन न कालेन न स्वरूपेण कोऽपि भेदः, कामं देहप्राणादयो भिद्यन्तां, ते तु जडपक्ष्याश्चेतननिमग्ना एव,—इत्येक एव चिदात्मा स्वातन्त्र्येण स्वात्मनि यतो वैश्वरूप्यं भासयति, ततो महेश्वरोऽन्तर्नीतामिदन्तां कृत्वा परानुन्मुखस्वात्मविश्रान्तिरूपाहंविमर्शपरिपूर्णः, अत एव सर्वज्ञत्वसर्वकर्तृत्वे नास्य यत्नोपपाद्ये । विचित्र[७]बुद्धिकर्मेन्द्रियविषये हि यथा ज्ञातृत्वकर्तृत्वे एकस्यैवात्मनस्तथेन्द्रियस्थानीयरुद्रक्षेत्रज्ञसहस्त्रविषयस्य भावराशेर्यज्ज्ञानं करणं च तदेकत्र चिदात्मनि,—इति ॥ १ ॥

ननु यद्येक एवायं महेश्वररूप आत्मा कस्तर्हि बन्धो यद्[८]वमोचनायायमुद्यमः ? इत्याशङ्क्याह

तत्र स्व[९]सृष्टेदंभागे
बुद्ध्यादिग्राहकात्मना ।

---

६ राजवत् पृथग्वर्तमानः ।
७ एतदेव दृष्टान्तेन द्रढयति विचित्रेति ।
८ बद्धस्यैव हि मोक्ष इति ।
९ स्वसृष्टेति स्वस्मिन् सृष्टे इत्यर्थः ।

अहंकारपरामर्श-
पदं नीतमनेन तत् ॥ २ ॥

'तत्रैवं स्वात्मनि महेश्वरे स्थिते तस्मिन्नेव प्रकाशरूपे स्वात्मदर्पणे तेनैव परमेश्वरेण स्वा-[10]तन्त्र्यात् तावत्सृष्टः संकोचपुरःसर इदंभागः, तन्मध्ये यदेतद्बुद्धिप्राणदेहरूपमिदन्तया वेद्यं तद्भिन्नस्य वेद्यस्य ग्राहकतया समुचितम् इदं-[11]भावाभिभवाप्रभविष्णुत्वात् कृतकेनापूर्णेनाहं-भावेन परामर्शेन भासमानं चकास्ति 'अहं दे[12]वदत्तोऽहं चैत्र' इति ॥ २ ॥

नन्वेवमप्यस्तु, तथापि कस्य बन्धः ईश्वर-व्यतिरिक्तो हि कोऽन्योऽस्ति[13] ? तदेतत् परिहर्तुमाह

---

१० ततश्चात्मन ऐक्येऽपि तस्माच्चात्मनो ग्राह्यग्राहकराशेरव्यतिरेकेऽपि तदुपपत्तौ हेतुमाह स्वातन्त्र्यादिति ।

११ सर्वभावमध्यगत्वात् बुद्ध्याद्यपि इदन्तया वेद्यमेव यद्यपि तथापि भिन्नस्य वेद्यस्य वेदकत्वेन ग्राहकत्वेन समुचितं न च शुद्धं तद्ग्राहकत्वमि-त्याह इदंभावेति ।

१२ स च बद्धस्तस्य मोक्ष इति सूत्रार्थः ।

१३ बुद्ध्यादेश्चाहम्भावो निजमेव वपुः प्रकाशपरामर्शपरमार्थत्वात् ततश्चाहंभावाभिषिक्तस्यापि बुद्ध्यादेर्बन्धरूपत्वं न समर्थितं भवेदिति ।

स्वस्वरूपापरिज्ञान-
मयोऽनेकः पुमान् मतः ।
तत्र सृष्टौ क्रियानन्दौ
भोगो दुःखसुखात्मकः ॥ ३ ॥

सत्यं, परमार्थतो न कश्चिद्[14] बन्धः केवलं स्वस्मादनुत्तरात् स्वातन्त्र्यात् यदा स्वात्मानं संकुचितमवभासयति[15] स एव, तदा स्वस्य पूर्णस्य रूपस्य यदपरिज्ञानं भासमानत्वेऽप्यपरामर्शरूपं, तदेव कारणत्वेन प्रकृतं यस्य स पूर्णत्वाख्यातिमात्रतत्त्वः[16] 'पुरुष' इत्युच्यते[17] । अत एवानेकस्तत्तद्देहप्राणबुद्धिविशेषेण संकोचग्रहणात् स च पुमान् भोक्ता संबन्धं भोगलक्षणमनुभवति[18], भोगश्च नाम तस्य यौ कल्पितौ[19] क्रियानन्दौ, कल्पिता क्रिया दुःखं, रजो हि प्रकाशाप्रकाशचाञ्चल्यरूपं दुःखमुच्यते; प्रका-

१४ कस्यचिदपीति शेषः, वस्तुतश्चित्स्वभावः स्वतन्त्र एवैकः शिव इति ।
१५ संविदेव संकुचिता भातीत्यर्थः ।
१६ प्राणशून्यदेहादिसंकोचवैचित्र्यचर्चितः ।
१७ साङ्ख्यादिषु लोके च ।
१८ अत एव बद्धः ।
१९ कल्पितौ सृष्टौ । क्रियानन्दौ क्रियाज्ञानशक्ती विमर्शप्रकाशमयौ ।

शरूपं च सत्त्वं सुखं; तमस्त्वप्रकाशरूपो[20] मध्ये विश्रमः प्रलयस्थानीयः ॥ ३ ॥

ननु सृष्टावित्यनेन किं व्यवच्छेद्यं किं च संग्राह्यम्? इत्याह

स्वाङ्गरूपेषु भावेषु
पत्युर्ज्ञानं क्रिया च या ।
मायातृतीये[21] ते एव
पशोः सत्त्वं रजस्तमः ॥ ४ ॥

विश्वरूपस्य भगवतः स्वरूपभूत एव विश्वत्रयः प्रकाशो यश्च विमर्शः, ते तावज्ज्ञानक्रिये स्वरूपपरामर्शापरित्यागेनैव तु यद्भिन्नतयापि विमर्शनं स्वरूपपरामर्श एव विश्रान्तम् 'अहमिदम्' इति सदाशिवेश्वरपरमार्थं सा भगवतो मायाशक्तिः[22], ता एतास्तिस्रः शक्तयो

२० अप्रकाशरूपो मायामय इत्यर्थः ।

२१ वैयधिकरण्यकथनेऽयमाशयः । भगवति विशुद्धचिदात्मनि क्रियाशक्तिरेव स्वातन्त्र्यात्मिका विमर्शमयी न तु मायात्वं तत्र किञ्चित् निर्मातव्यभेदापेक्षया तु तदिति पशुरूपतानुलग्नैव माया, अतश्च ज्ञानक्रियामायानां सूत्रे वैयधिकरण्यम् ।

२२ अत एवैकं शिवतत्त्वं विहाय मायाशक्तिः सर्वत्र कृतव्याप्तिरिति शिवदृष्टौ ।

भगवति नैसर्गिक्यो दृष्टाः। स्वरूपापरिज्ञाने तु भिन्नेषु भावेषु ज्ञानं, क्रिया, शुद्धमेव भिन्नत्वं प्रकाशविमर्शशून्यम्, — इति पशोः प्रकाशः प्रकाशाप्रकाशावप्रकाशश्च, — इति क्रमेण सुखदुःखमोहलक्षणानि प्रकाशक्रियानियमनशीलानि सत्त्वरजस्तमांसि ॥ ४ ॥

ननु चैवं सति यथा परमेश्वरस्य ज्ञानक्रियामाया[२३] अव्यतिरेकिण्यः शक्तयः, — इत्युच्यन्ते, तद्वत् पशोः सत्त्वरजस्तमांसि प्रसज्यन्ते, व्यतिरिक्तानि च तानि पुंस्तत्त्वाद्गण्यन्ते; तदेतत् कथम्? इति संशयं शमयति

भेदस्थितेः शक्तिमतः
शक्तित्वं नापदिश्यते।
एषां गुणानां करण-
कार्यत्वपरिणामिनाम् ॥ ५ ॥

सत्यम्, एवं स्यात् यदि भेदग्रहो न भवेत्, भेदव्यवहारस्त्वयं विचार्यते। तत्र च

---

२३ यद्यपि च माया अव्यतिरेकिणी शक्तिर्न भवति निर्मातव्यभेदापेक्षित्वात्तस्याः, स्वातन्त्र्यस्य क्रियया परिग्रहात् तथापीह साहचर्योपरोधेन सामान्येन कथिता, इति बोध्यम्।

संकुचितस्वभावः पुरुषो, नास्य नैसर्गिकं भावविषयं प्रकाशनादिरूपं सर्वदा तत्प्रसङ्गात्, [२४]अपि त्वन्यसंबन्धकृतम्; ततश्च तस्मात् पशोः शक्तिमत्त्वेन शङ्क्यमानाद् भेदेन यत एतानि सत्त्वादीनि, ततः शक्त्[२५]यो व्यतिरेकमुक्ता;— इति नोच्यन्ते किं तूपकरणत्वात् 'गुणा' इत्युच्यन्ते। ननु पुरुषात् किमिति ते भेदेनोच्यन्ते?, उच्यते, सुखदुःखमोहपरिणामरूपमेतत्करणत्रयोदशकं कार्यदशकं च सुखादिस्वभावत्वेनानुभूयते,—इति सुखदुःखमोहाः करणकार्यवर्गतादात्म्यवृत्तयो यदि पुरुषव्यापि तादा[२६]त्म्यं भजेरन् तर्हि पुरुषः कार्यकरणपर्यन्तसृष्टिमयः संपन्नः, परि[२७]णामश्च दूषितः,—इति स्वातन्त्र्यशक्त्या पुरुषो विश्वरूपः,—इत्यायातम्। तथा च—न कश्चित् पुरुष ईश्वर एव, तस्मात्

---

२४ यतो हि सर्वदा तत्संभवप्रसङ्गस्ततश्चेदमनुमीयते अन्यसंबन्धकृतं तदिति चाह अपि त्विति ।

२५ पुरुषश्च भोक्तृरूपात् स्वस्मात्तानि यतो भेदेन मन्यते ततस्तदभिमानमहिम्ना परमभोक्तुरपि शक्तिमतो भिन्नानीति वस्तुतोऽस्य धरान्ताः शक्तिरूपा अपि न तथेत्याशयशेषः ।

२६ पुरुषाव्यतिरेकेण स्युरित्यर्थः ।

२७ तद्वादादस्य दूषितत्वमिति भावः ।

अप्रत्यभिज्ञानमयपुरुषस्वरूपविचारे सत्त्वादयो भिन्ना एव,—इति स्थितम् ॥ ५ ॥

ननु ज्ञानादीनि कथं सत्त्वादिरूपाणि पशुं प्रति? इत्याह

[28] सत्तानन्दः क्रिया पत्यु-
स्तदभावोऽपि सा पशोः ।
[29] द्वयात्मा तद्रजो दुःखं
श्लेषि सत्त्वतमोमयम् ॥ ६ ॥

इह तावत् पतिर्विश्वस्यावभासमानवैचित्र्यलक्षणेन सृष्ट्यादिना पालयिता स्वप्रकाशस्वभावः, तस्य विश्वपतेर्या सत्ता भवनकर्तृता स्फुरत्तारूपा पूर्वं व्याख्याता 'सा स्फुरत्ता महासत्ता' (ई० प्र० १।५।१४) इत्यत्र, सैव प्रकाशस्य विमर्शाव्यतिरेकात् विमर्शात्मकचमत्काररूपा सती क्रियाशक्तिरुच्यते, परौन्मुख्यत्यागेन स्वात्मविश्रान्तिरूपत्वाच्च सैव आनन्दः; तदेवं भगवतश्चिदात्मतयैवेयद्[30]रूपता ।

२८ शक्तिमाशङ्कितां प्रतिनिवर्त्य ज्ञानादीनामिदानीं सत्त्वादिगुणरूपत्वमुपपद्यते इत्याह ।

२९ द्वयं चेति तदात्मा चेति द्वयस्य वात्मेति ।

३० सत्तादिरूपतेत्यर्थः ।

पशोस्तु सत्ता तद्भावश्च आनन्दश्च तद्भावश्च संकुचिततद्रूपत्वात्; तेन योऽसौ सत्तानन्दभागस्तत्प्रकाशसुखवृत्ति सत्त्वं, यस्तद[३१]भावस्तदावरणमोहरूपं तमः, [३२]एते च ते सत्त्वतमसी नीलानीलवत् परस्परपरिहारेण यद्यपि वर्तेते कार्यत्वकारणत्ववत् तथापि एकपरामर्शगोचरीकार्यधर्मापेक्षया चित्रपतङ्गसंगतनीलानीलात्मकरूपन्यायेनान्यो[३३]न्यमिश्रतयापि भातः, अतो योऽयं 'द्व्यात्मा' मिश्रस्वभावः तद्रजोगुणः, अत एव प्रकाशाप्रकाशस्वरूपयोः सत्त्वतमसोरत्र श्लेषेणावस्थानम्, — इति दुःखत्वम्; [३४]प्रियपुत्रादेरेकघन एव हि प्रकाशः सुखम्; एकघन एवाप्रकाशो मोहः। यस्तु कथञ्चित्प्रकाशो यथा सव्याधिकदेहरूपतयानभिमतया, कथञ्चिच्चाप्रकाशो यथा गतगदकल्याणधर्मयोगितयाभिमतया तदेव दुःख-

---

३१ तयोः प्रकाशानन्दयोरभावः स एव सत्त्वस्य चाभाव इत्यर्थः।

३२ रजःस्वरूपकथनार्थं भूमिकां रचयति एते चेति।

३३ एकपरामर्शबलादिति भावः।

३४ परस्परसंमिश्रे एव सत्त्वतमसी रजसो रूपमिति द्रढयति प्रियपुत्रादेरिति। ततश्चायमर्थः एकघनत्वे प्रकाशाप्रकाशयोः सुखमोहमात्रता, पुत्रस्य तु व्याधितस्य प्रकाशः कल्याणस्याप्रकाश इति।

त्वम्; अयमेव च पूर्वापरीभावसारः क्रियापरमार्थः। अत्रानुभयरूपत्वं तु नास्ति, प्रतीतौ कस्यांचित् कल्पिताकल्पितरूपायामननुप्रवेशात् तस्य। तथा हि—नीलं तावदकल्पितरूपायां धियि भाति; नीलाभावस्तु तुच्छोऽपि कल्पनाकल्पित आभासमानत्वात् तावद्व्यवहारपरमार्थः, तदुभयव्यामिश्रणात्तु नीलानीलं भातु नाम; यत्त्वनुभयरूपं तन्नीलप्रतीत्या तावदकल्पितया न विषयीकृतं चेत् तत् कल्पितामनीलधियमनुधावेत्; अथ तां कल्पितां धियं नाविशत्यकल्पितया विषयीकृतं नीलमेव स्यात्,—इति न पशोश्चतुर्थोऽस्ति गुणः। अपिश्चार्थे, पशोः सा सत्ता सत्त्वं, तदभावस्तमो, द्व्यात्मा रजश्च,—इति संबन्धः॥ ६॥

एवं तावत् पतिपशुरूपं प्रमातृतत्त्वं[३५] संक्षे-

३५ प्रमातृतत्त्वं संक्षेपेण निर्णीतमित्युपलक्षणं ततो भोगश्च सुखाद्यात्मा यथायोगं निरूपितः। अथातः प्रक्रान्तप्राप्तभोग्यतत्त्वावमर्शः। तत्र चायमाशयः एक एवायं भोक्तृभोगभोग्यतत्त्वार्थविमर्श एकवक्तव्यैव कर्तव्यो विमर्शविच्छेदो माभूदिति निर्णयावसरः तदाह सूत्रेण 'येऽपि' इति।

पेण निर्णीतम्; अथ प्रमेयतत्त्वं निर्णेतुं पत्यौ तावत् 'इत्थमिदं प्रमेयतत्त्वम्' इति निर्णेतुमाह

येऽप्यसामयिकेदन्ता-
परामर्शभुवः प्रभोः।
ते विमिश्रा विभिन्नाश्च
तथा चित्रावभासिनः ॥ ७ ॥

इहाभासा एव तावदर्थाः,—इत्युक्तं, ते च परामर्शैक्येन कदाचिन्मिश्रीक्रियन्ते यदा विशेषरूपता, कदाचिदमिश्रा एव परामृश्यन्ते यदा सामान्यरूपता, ते एते उभयात्मानोऽप्यसामयिकेनाकल्पितेनेदंभावेन सहजभेदपरामर्शरूपेणाङ्गुलिनिर्देशादिप्रख्येन गोचरीकार्याः प्रभोरपि[३६] न केवलं सद्योजातबालादेर्यावदीश्वरस्यापि, 'तथा' तेन सामान्यविशेषप्रकारेण चित्रतयावभासन्ते। चित्रत्वं हि तयोः—यन्मिश्रत्वममिश्रत्वं च युगपदेकाहन्ताविश्रान्तं भाति,—इति ईश्वरदशायां भा-

३६ इयता सूत्रेऽपिशब्दः प्रभोरित्येतदनन्तरत्वेन व्याख्येय इति दर्शितम्।

वोल्लासनान्तरीयकत्वेन संवित्संकोचरूपं नि-
षेध्यानुपरक्तनञर्थमात्ररूपं शून्यं संवित्प्रका-
शेनैव प्रकाशमानमहन्तानिषेधरूपामसामयि-
कीमिदन्तामुल्लासयति ॥ ७ ॥

एवं तावदीश्वररूपस्य पत्युरित्थं प्रमेयतत्त्वं, परमशिवे तु भगवति प्रमेयकथैव कथमुत्तिष्ठति, प्रमेयकथोत्थापकत्वमेव भगवतः सदाशिवेश्वरत्वम्; अतोऽधुना पशुं प्रति कीदृक् प्रमेयस्य वृत्तान्तः, — इति सन्देहमपोहति श्लोक[37]त्रयेण

ते तु भिन्नावभासार्थाः
प्रकल्प्याः प्रत्यगात्मनः।
तत्तद्विभिन्नसंज्ञाभिः
स्मृत्युत्प्रेक्षादिगोचरे ॥ ८ ॥
तस्यासाधारणी सृष्टि-
रीशसृष्ट्युपजीविनी।
सैषाप्यज्ञतया सत्यै-
वेशशक्त्या तदात्मनः ॥ ९ ॥

३७ तत्र प्रथमं पीठबन्धं करोति प्रथमेन।

स्वविश्रान्त्युपरोधाया-
चलया प्राणरूपया ।
विकल्पक्रियया तत्त-
द्वर्णवैचित्र्यरूपया ॥ १० ॥

तुर्विशेषं द्योतयति प्रत्यगात्मनस्तु इत्थं प्रमेयरूपा अर्था, न त्वीश्वरवदुक्तनयेनेति[३८] । 'भिन्न' इति मिश्रामिश्रतया भिद्यमान आभासो येषामर्थानां ते विशेषसामान्यात्मानोऽर्थाः प्रत्यगात्मनः प्रतिपुरुषमविमिश्रस्वसंवेदनावगमरूपस्यासंकीर्णाहंप्रकाशात्मनः[३९] प्रकल्प्या विकल्पनीयाः, प्रतिप्राणि स्ववासनानुसारेण विभिन्नाभिः संज्ञाभिः 'प्रियोऽयं शत्रु-

३८ ईश्वरस्य हि शुद्धविमर्शविषयाः सर्वेऽर्था न तु विकल्प्या इति । ननु यावदहन्ता न संकुचिता न तावदिदन्तोल्लासः, यावच्च नासौ तावत्कथमहन्ता संकुचेदिति चान्योन्याश्रयं दोषावहम् । अत्रोच्यते संविदः स्वातन्त्र्यादनुत्तरादतिदुर्घटमिदमपि सममेव भाति अहमिदमिति, तत्राहमिति पूर्वोक्तमेव संविद्रूपम्, इदमित्येतच्च संकुचितं यदहमितिरूपं तत्राहंभागस्य पूर्णसंविद्रूपाहम्भावाव्यतिरेकेणैव प्रथा, संकोचभागस्तु यः स इदन्ता, उत्तीर्ण इव तत्रैवाहमित्यत्र रूपे प्रतिबिम्बकल्पतया स्फुरन्नपि न स्फुटो नेदम्भावेनापि तु निर्मलतम आदर्शे द्वितीयमलिनादर्शवदपरेदन्तानुग्राहकत्वेनेत्येकरसमीदृशं संविदः स्वातन्त्र्यमिति ।

३९ देहादिसंकुचिताहंप्रकाशात्मनः ।

रयम्' इत्यादिकाभिर्भावनाविशेषानुसारेण तत्तद्विचित्रसुखदुःखाद्युपयुक्ताभिः स्मरणे उत्प्रेक्षणे संकल्पनेऽन्यत्रान्यत्र च विकल्पयोगे। एतदुक्तं भवति—ईश्वरस्य विकल्पात्मकतामन्तरेण शुद्धविमर्शविषयीभाव्या अर्थाः, पशो[४०]स्त्वन्योन्यापोहनहेवाकिनि विकल्पे समारूढास्तेऽर्था भवन्ति, सांसारिकहानादानादिव्यवहारोपयोगात् इति। [४१]नन्वविकल्प्यत्वे यावानेवार्थस्तावानेव यदि विकल्प्यत्वे तत्को विशेषः प्रमेयस्य पतिपशुरूपतायाम्, ? उच्यते, तस्येति पशुकर्तृका सृष्टिस्तेषामर्थानामीश्वरसृष्टानामुपरिवर्तिनी, अत एव तामीश्वरसृष्टिमुपजीवन्ती असाधारणी[४२] प्रतिप्रमातृनियता। तद्यथा 'इदं हृद्यम्' इति येन सृष्टं तत् तस्यैव तदा नान्यस्य। ननु यदि पशोरपि सृष्टिश-

४० तत एव संबद्धात्मकविद्योन्मेषेऽपि मायाविजृम्भितप्रधानापोहनसारतया हानादानादिविषये कार्यत्वेनार्था भान्ति नीलमिदं गौरोऽहं सुख्यहमिति।

४१ विकल्प्यमान एवार्थो बन्धक इतीयतायातं तत्र शङ्कते नन्विति अयमर्थः विकल्प्यत्वे हि यावान् यथा वार्थोऽविकल्प्यत्वेऽपि तावानेव तथा वा सोऽर्थः ततश्च तत्क इति शङ्कावश्यभाविनीति।

४२ प्रतिप्रमातृ प्रतिकालं च मात्रन्तरदशान्तराद्यनुवर्तनविहीना।

क्तिरस्ति तर्हीश्वर एव; सत्यम्, ईश्वर एवासौ। नन्वेवं साधारणत्वं[43] कस्मात् सृष्टेर्न भवति ?; भवेत् यदि स्वशक्तिं परिज्ञानीयात्, यावता सा तस्यापरिज्ञाता परवशस्यैव सतो विकल्पक्रिया विकल्पनशक्तिरुदेति। ननु केन सा तस्योत्थाप्यते ?; आह – ईश्वरस्य[44] परामर्शरूपतया[45] शब्दराशिलक्षणस्य या शक्तिः स्वरूपविश्रान्तिलक्षणपारमैश्वर्योपरोधप्रयोजना ब्राह्म्यादिदेवताचक्रमयी[46] तैस्तैः ककारादिवर्णवैचित्र्यैर्विचित्रा[47], तया यासौ विकल्पक्रिया तस्य पशोरेकत्र निरूढ्यभावात् चञ्चला[48] तेन 'मित्रमयं शत्रुरयम्' इत्यादिवर्णवैचित्र्यानुविद्धतया विकल्पनक्रियया तदात्मन ईश्वरस्वभावस्यैव पशोरसाधारणी सृष्टिः,

'पञ्चवक्त्रश्चतुर्दन्तो हस्ती नभसि धावति।'

---

४३ ईश्वरसृष्टिवत्।

४४ ईशस्त्वेनैव तदपरिज्ञानपरिज्ञानमात्रतो हि बद्धमुक्ततेत्याह ईश्वरस्येति।

४५ विश्वपरामर्शविग्रहत्वेन।

४६ तत्तद्ब्राह्म्यादिदेवताचक्राधिष्ठितवर्गाष्टकमयी।

४७ ककारादिवर्णगतव्याससमासशतसहस्रगर्भतयाष्टाष्टभेदविभिन्ना।

४८ प्राणापानादिप्रेङ्खारोहणचञ्चला।

इत्यपि विमिश्रतया विकल्पसृष्टिः, तानाभासान् ईश्वरसृष्टानेवोपजीवति, — इति सर्वा पाशवी प्रत्ययसृष्टिरीश्वरसृष्ट्युपजीविनीत्युक्तम् ॥१०॥

नन्वेवं यदि पाशवी सृष्टिः संसाररूपा तर्हि पारमेश्वरी सृष्टिः पशोः किं कुर्यात्? इति निर्णीयते

साधारणोऽन्यथा चैशः[४९]
सर्गः स्पष्टावभासनात्।
विकल्पहानेनैकाग्र्यात्
क्रमेणेश्वरतापदम् ॥ ११ ॥

ऐश्वरः सर्गो द्विधा, साधारणश्च घटादिरसाधारणश्च 'अन्यथा' इति निर्दिष्टो द्विचन्द्रादिः; [५०]तस्य च सामान्यलक्षणं स्पष्टावभासनं नाम। सोऽयं सर्गो यदा वि[५१]कल्पहानक्रमेण तस्मिन्निर्विकल्पकपरिगृहीत एव स्पष्टाभेऽर्थे एकाग्रत्वमवलम्ब्य 'अहमिदम्' इत्यैश्वर्यपरामर्शपदं भवति

४९ चकारादसाधारणो द्विचन्द्रादिः स चोभयोऽपि पाशवसृष्टेरन्यथाभूत इति बृहत्याम्।

५० तस्येति ऐश्वरस्य सर्गस्य।

५१ विकल्पो हि पाशवी सृष्टिः तेन च संसारित्वं तदुत्पुंसने च विकल्पहानावपि पारमेशसृष्टेरन्यथात्वमिति।

तदा अन्तर्लक्ष्यबहिर्दृष्टिनिमेषोन्मेषपरिहारोपदेशदिशा 'क्रमेण' अभ्यासतारतम्येन पशोः पशुत्वं प्रतिहन्तीश्वरत्वं च दर्शयति । किं च योऽयं विकल्पसर्गः पाशव उक्तः सोऽपि यदि 'अन्यथा' इति पूर्वोक्तरूपवैपरीत्येन परिज्ञातयैशशक्त्या परिज्ञाततादात्म्यस्य भवति तदा सोऽपि साधारण एवाप्यायनाभिचरणशान्त्यादिविकल्प इव न्यस्तमन्त्रस्य भावितान्तःकरणस्य ॥ ११ ॥[52]

एवं विकल्पनिर्ह्रासेन निर्विकल्परूपसात्मीभावे विश्वात्मसाक्षात्कारलक्षणः स्वप्रत्यय एव मोक्षो दर्शितः, अधुना विकल्पनिर्ह्रासाभावेऽपि तं दर्शयति

सर्वो ममायं विभव
इत्येवं परिजानतः ।
विश्वात्मनो विकल्पानां
प्रसरेऽपि महेशता ॥ १२ ॥

---

५२ तथा चोक्तम्

'अन्तर्लक्ष्यबहिर्दृष्टिर्निमेषोन्मेषवर्जिता ।
एषासौ भैरवी मुद्रा सर्वतन्त्रेषु गोपिता ।'

इति ।

नहि प्रत्यगात्मा नाम पशुः कश्चिदन्यो योऽहम्, अपि तु परिगृहीतग्राह्यग्राहकप्रकाशैकघनः परो यः स एवाहं स चाहमेव, न त्वन्यः कश्चित्; अतो विकल्पसृष्टिरपि मम स्वातन्त्र्यलक्षणो विभवः, —इत्येवं विमर्शे दृढीभूते सत्य[५३]परिक्षीणविकल्पोऽपि जीवन्नेव मुक्तः। यथोक्तम्

'शङ्कापि न विशङ्कयेत निःशङ्कत्वमिदं स्फुटम् ।'

इति ॥ १२ ॥

नन्वेवं बद्धमुक्तयोः प्रमेयं प्रति को भेदः?, उच्यते

मेयं साधारणं मुक्तः
स्वात्माभेदेन मन्यते ।
महेश्वरो यथा बद्धः
पुनरत्यन्तभेदवत् ॥ १३ ॥

श्रीमत्सदाशिवेश्वरपदादारभ्य क्रिमिपर्यन्तप्रामातृवर्गाधिष्ठातृ यदहमितिरूपं तदेवात्मतयाभिनिविशते मुक्तः; ततश्च विश्वस्यापि प्रमेयं ममापि, मम प्रमेयं विश्वस्यापि, प्रमेयं

५३ विकल्पा अपि अस्य महाविमर्शपतिता अविकल्पीभवन्ति ।

चेदं ममैवाङ्गभूतं प्रमेयान्तरमपि तथा, — इत्यनेन क्रमेण प्रमेयं परस्परतश्च प्रमातृवर्गाच्चाऽव्यावृत्तम्, — इत्येकरसाभेदविश्रान्तितत्त्वमस्य सर्वं परामर्शपदमुपैति। बद्धस्य तु सर्वमेतद्विपरीतम्, — इत्येकरसभेदविश्रान्त एवासौ ॥१३॥

ननु सदाशिवेश्वरभुवि जीवन्मुक्तिपदे बद्धरूपपशुप्रमातृविषये च प्रमेयवृत्तान्तः परीक्षितः, परमशिवे तु कथमसौ? इत्याशङ्क्याह

[५४] सर्वथा त्वन्तरालीना-
नन्ततत्त्वौघनिर्भरः।
शिवः चिदानन्दघनः
परमाक्षरविग्रहः ॥ १४ ॥

न खलु भगवति श्रीपरमशिवे प्रमेयकथा काचिदस्ति, तत्त्वौघस्य सर्वथा तत्र चिद्रूपतामात्रविश्रान्तत्वेन लीनत्वात्; ततश्च सावस्था संवित्स्वभावेन स्वात्मविश्रान्त्यानन्देन अकृत्रिमनैसर्गिकपरामर्शात्मकस्वात्मचमत्कारलक्षणेनैकघना अविच्छिन्नतद्रूपा परमाक्षरेण

५४ विकल्पाविकल्पभुवि च योगिनः प्रोन्मीलितकरणस्योक्तः प्रमेयक्रमः निमीलितसकलकरणस्य तु कीदृगसावित्यत आह।

विग्रहवती भगवतो विश्वमयस्यानवच्छिन्नानुत्तरधाम्नो गलितप्रमेयकथा सर्वोत्तीर्णा व्यपदिश्यते ॥ १४ ॥

एवमधिकारचतुष्टयोक्तं यद्वस्तु तत्फलमाह

एवमात्मानमेतस्य
सम्यग्ज्ञानक्रिये तथा ।
जानन्यथेप्सितान्पश्य-
ञ्जानाति च करोति च ॥१५॥

एवमिति, ईश्वररूपमात्मानं तस्य च स्वाव्यतिरिक्ते स्वातन्त्र्यमात्ररूपे ज्ञानक्रिये जानन् एवं-भूतोऽयमात्मा न तु काणादादिदर्शितः, इत्थं च ज्ञानक्रिये न तु तस्य व्यतिरिक्ते केचन,—इति परामृशन् यद्यदिच्छति तत्तज्जानाति करोति च समावेशाभ्यासपरोऽनेनैव शरीरेण; अतत्परस्तु सति देहे जीवन्मुक्तस्तत्पाते परमेश्वर एवेति ॥१५॥ आदितः १८७॥

इति श्रीमदाचार्योत्पलदेवपादविरचितायामीश्वरप्रत्यभिज्ञायां
श्रीमदाचार्याभिनवगुप्तकृतविमर्शिन्याख्यटीकोपेतायां
तत्त्वसंग्रहाधिकारे प्रथममाह्निकम् ॥

---

अथ

# ईश्वरप्रत्यभिज्ञायां

## श्रीमदाचार्योत्पलदेवविरचितायां

## आचार्याभिनवगुप्तविरचितविमर्शिन्याख्य-टीकोपेतायाम् ।

## तत्त्वसंग्रहाधिकारे

## द्वितीयमाह्निकम् ।

**अस्यार्थस्य स्वप्रत्ययसिद्धस्यापि गुरुपरम्परोपदेश उपोद्बलको वक्तव्यः, शास्त्रदृष्टिर्हि**

---

१ ज्ञानक्रियाधिकारयुगलकेन तत्त्वार्थसंग्रहसहितेन स्वप्रकाशेऽपि तत्त्वे युक्त्युपबृंहिते निरूपिते स्वत इत्यंशः पूरितः, आगमाधिकारेण तमेवार्थमुपोद्बलयता शास्त्रत इत्ययमंशः पूरित इत्याह शास्त्रदृष्टिर्हीति शास्त्रदृष्टिरपि तत्प्रसिद्धगुरुपरम्परोपदेशेन सम्यगागमत्वं नेयेति च परमहदन्तरालदिव्यदिव्यादिव्यादिसंबन्धमनादृत्य स्वबुद्धिमात्रपुस्तकशरणा विडम्बिता इत्याशयेन

> 'पुस्तकाधीतविद्याश्च गुरुक्रमविवर्जिताः ।
> आचरन्तो दिशन्तश्च पच्यन्ते नरके चिरम् ।
> यातनाराजराजानां ते भोक्तारो विनिन्दिताः ।
> तस्माद्गुरुक्रमायातं दिशन्नेति परं शिवम् ।

इत्युक्तम् । ततश्च गुरुत इत्ययमंशस्तृतीयः पूरयितव्यः । तदुक्तं किरणसंहितायाम्

> 'स्वतोऽपि गुरुतः शास्त्राद्विमर्शस्त्रिविधः स्मृतः ।'

इति श्लोकत्रयेण गुरुत इति पूरयति ॥ तत्राद्यश्लोकेन स्वगुरुपर्वक्रमसुपदेशस्यापूर्वतयाप्रयासकारित्वेनावश्योपदेश्यतां च दर्शयति ।

दर्शितागमाधिकारेण; एवं गुरुतः शास्त्रतः स्वत एतद्दृढीकृतं भवति, – इत्यभिप्रायेण गुरुपारम्पर्यं दर्शयति

इति प्रकटितो मया
सुघट एष मार्गो नवो
महागुरुभिरुच्यते
स्म शिवदृष्टिशास्त्रे यथा ।
तदत्र निदधत्पदं
भुवनकर्तृतामात्मनो
विभाव्य शिवतामयी-
मनिशमाविशन् सिद्ध्यति ॥ १ ॥

अस्मत्परमेष्ठिभट्टारकश्रीसोमानन्दपादैः शिवदृष्टिशास्त्रेऽयमभिनवः सर्वरहस्यशास्त्रान्तर्गतः सन्निगूढत्वादप्रसिद्धो बाह्यान्तरचर्याप्राणायामादिक्लेशप्रयासकलाविरहात् सुघटस्तावदुक्तः[२],

---

२ यतः प्रत्यभिज्ञामात्रान्मोक्षस्तत एव यमनियमादिक्लेशयोगेऽनुपयोग एवेति सुघटत्वम् । तथा च

'स्फुटोपायमनायासमनारम्भं महाफलम् ।
श्रोतुमिच्छामि देवेश योगं योगविदां वर ॥

स एवात्र प्रकटतां परवादकलङ्कशङ्कापसारेण नीतः, यत एवं शास्त्रगुरुस्वप्रत्ययसिद्धोऽयमर्थः, तदिति तस्मादत्र प्रमेये पदं परामर्शं विश्रमयन् विश्वकर्तृत्वलक्षणमैश्वर्यमात्मनो विभाव्य दार्ढ्येन यदा परामृशति तर्हि तत्परामर्शमात्रादेव तावज्जीवन्मुक्तो भगवाञ्शिव एव । यथोक्तं परमेष्ठिपादैः

'ज्ञाते शिवत्वे सर्वस्थे प्रतिपत्त्या दृढात्मना ।
करणेन नास्ति कृत्यं क्वापि भावनयापि वा ॥
सकृज्ज्ञाते सुवर्णे किं भावनाकरणादिना ।
सर्वथा पितृमात्रादितुल्यदार्ढ्येन सत्यता ॥'(शि. दृ.)

इत्यादि । तां विभाव्य यद्यनिशमाविशति शरीरप्राणबुद्धिशून्येभ्योऽन्यतमं द्वयं सर्वं वा तत्रैव निमज्जयति, अनवरतं तत्तां तां विभूतिं

---

प्राणायामादिकैरङ्गैर्योगाः स्युः कृत्रिमा यतः ।
तेन नाकृतकस्यास्य कलामर्हन्ति षोडशीम् ॥'

इत्यादि च यदपि रहस्यागमेषु निरूपितं तथा विस्पष्टत्वेन नोक्तं गर्भीकृत्य तूक्तम्

'न चैतदप्रसन्नेन शङ्करेणोपदिश्यते ।
कथञ्चिदुपलब्धेऽपि वासना न प्रजायते ॥
वासनामात्रलाभेऽपि योऽप्रमत्तो न जायते ।
तमनित्येषु भोगेषु योजयन्ति विनायकाः ॥'

इति ।

परविभूतिपर्यन्तां लभते । ननु यद्यात्माख्यं वस्तु तदेव तर्हि तस्य प्रत्यभिज्ञानाप्रत्यभिज्ञानयोरविशेषः, नहि बीजमप्रत्यभिज्ञातं सति सहकारिसाकल्ये नाङ्कुरं जनयति, तत् क आत्मप्रत्यभिज्ञाने निर्बन्धः ?; उच्यते, द्विविधार्थक्रियास्ति बाह्या चाङ्कुरादिका प्रमातृविश्रान्तिचमत्कारसारा च प्रीत्यादिरूपा, तत्राद्या सत्यं प्रत्यभिज्ञानं नापेक्षते, द्वितीया तु तदपेक्षते एव ; इह च 'अहं महेश्वर' इत्येवं-भूतचमत्कारसारा परापरसिद्धिलक्षणा जीवन्मुक्तिविभूतियोगमय्यर्थक्रिया, — इतीश्वरप्रत्यभिज्ञानमत्रावश्यापेक्षणीयम् ॥ १ ॥

ननु प्रमातृविश्रान्तिसारार्थक्रिया प्रत्यभिज्ञानेन विना न दृष्टा, सति तत्र दृष्टा, — इति क्वैतदुपलब्धम् ? इत्याशङ्क्याह

**[३]तैस्तैरप्युपयाचितैरुपनत-**
**स्तन्व्याः स्थितोऽप्यन्तिके**

३ तैस्तैरुपयाचितैरिति देवताप्रार्थनादूतीप्रेषणात्मावस्थानिवेदनाभिः । तन्व्या इति विरहक्लशायाः प्रत्यभिज्ञानमात्रादानन्दलाभः परिशीलनात्तु संभोगसहस्रप्राप्तिः ।

कान्तो लोकसमान एवमपरि-
ज्ञातो न रन्तुं यथा ।
लोकस्यैष तथानवेक्षितगुणः
स्वात्मापि विश्वेश्वरो
नैवालं निजवैभवाय तदियं
तत्प्रत्यभिज्ञोदिता ॥ २ ॥

यदा नायकगुणसंश्रवणप्रवृद्धानुरागा कामिनी तद्दर्शनमेव परमुपादेयमाकाङ्क्षन्ती दिवानिशमवशहृदया देवतोपयाचितानि दूतीसंप्रेषणानि मदनलेखकद्वारकात्मावस्थानिवेदनानि कुर्वाणा विरहक्षामीभवद्गात्रलतिका तिष्ठति, तदा तदुपयाचितवशादशङ्कितमेव सविधवर्तिनि प्रियतमेऽवलोकिते तैस्तैरुत्कर्षविशेषैः परामर्शपदवीमगच्छद्भिर्जनसाधारणतामापादिते संपन्नमपि तत्प्रियतमावलोकनं न हृदयं पूर्णीकरोति; तथा स्वात्मनि विश्वेश्वरे सततं निर्भासमानेऽपि तन्निर्भासनं न हृदयस्य पूर्णतामाधत्ते; यतः सोऽप्यात्मा

विश्वज्ञत्वकर्तृत्वाद्यप्रतिहतस्वशक्तिलक्षणपारमेश्वर्योत्कर्षयोगेन न परामृष्टः, — इति भासमानघटादितुल्यवृत्तान्तो जातः। यदा तु दूतीवचनाद्वा तल्लक्षणाभिज्ञानाद्वोपायान्तराद्वा तानुत्कर्षान् हृदयङ्गमीकरणेनामृशति, तदा तत्क्षणमद्भुतफुल्लन्यायेनैव तावत् कामपि पूर्णतामभ्येति, परिभोगाभ्यासरसे तु विश्रान्त्यन्तराण्यपि लभते; तद्वदात्मनि गुरुवचनाज्ज्ञानक्रियालक्षणशक्त्यभिज्ञानादेर्वा यदा पारमेश्वर्योत्कर्षहृदयङ्गमीभावो जायते, तदा तत्क्षणमेव पूर्णतात्मिका जीवन्मुक्तिः; समावेशाभ्यासरसे तु विभूतिलाभः, — इति तस्य प्रत्यभिज्ञैव परापरसिद्धिप्रदायिनी भवति ॥२॥

सर्वोपकारकं महाफलमिदं शास्त्रं प्रसिद्धान्वययोगेन नामधेयप्रसिद्ध्या च तदुत्कर्षस्मरणद्वारजनितसंभावनाप्रत्ययलक्षणप्रवर्तकसंवेदनया जनं प्रवर्तयितुं पितुर्नाम्ना चोपसंहारं दर्शयति

जनस्यायत्नसिद्ध्यर्थ-
मुदयाकरसूनुना ।
ईश्वरप्रत्यभिज्ञेय-
मुत्पलेनोपपादिता ॥ ३ ॥

यस्य कस्यचिज्जन्तोरिति नात्र जात्याद्यपेक्षा काचित्, – इति सर्वोपकारित्वमुक्तम् । अयत्नेन सिद्धिः परापररूपा यथा स्यात्, – इति महाफलत्वम् । उदयाकरपुत्रः श्रीमानुत्पलदेवोऽस्मत्परमगुरुरिदं शास्त्रमकार्षीत्, – इति तत्प्रसिद्ध्या जनः प्रवर्तते, – इति प्रवर्तनाद्वारेण सोऽनुगृहीतो भवति, – इत्युभयनामनिर्देशः । इयमिति हृदयङ्गमतामुपपत्तिशतैरानीता, – इति शिवम् ॥३॥ आदितः १९० ॥

---

४ अधुना व्याख्यानश्रवणचिन्तनाभ्यसनसाफल्यसिद्धये स्वकपूर्वगुरुवन्दनमवश्यं कर्तव्यमिति शिक्षया प्रवृत्तशिष्यानुग्रहाय स्वात्मनो गुरुत्वे योग्यताभिधानाय

'कीर्तनीयो गुरोर्वर्गः शास्त्रार्थस्य प्रसिद्धये ।'

इति नयं पालयितुं पितुरलौकिकवस्तुविषयप्रसिद्ध्यभिधानेनोपकाराय प्रसिद्ध्या 'इष्टे लोकः प्रवर्तते' इति लोकस्याप्रवृत्तस्य प्रवर्तनाद्वारेणानुग्रहाय च स्वात्मनो वंशप्रदर्शनपूर्वकनामप्रकटीकरणपुरःसरमधिकारप्रयोजनसंबन्धाभिधेयाभिधानानां निगमनसूत्रमिति ।

एषाभिनवगुप्तेन सूत्रार्थप्रविमर्शिनी ।
रचिता प्रत्यभिज्ञायां लघ्वी वृत्तिरभङ्गुरा ॥

वाक्यप्रमाणपदतत्त्वसदागमार्थाः
स्वात्मोपयोगमुपयान्त्यमुतः स्वशास्त्रात् ।
भौमान्तरसाञ्जलमयांश्च न सस्यपुष्टौ
मुक्त्वार्कमेकमिह योजयितुं क्षमोऽन्यः ॥

आत्मानमनभिज्ञाय विवेक्तुं योऽन्यदिच्छति ।
तेन भौतेन किं वाच्यं प्रश्नेऽस्मिन्को भवानिति ॥

---

इति श्रीमदाचार्योत्पलदेवविरचितायामीश्वरप्रत्यभिज्ञायां
श्रीमदाचार्याभिनवगुप्तविरचितविमर्शिन्याख्यटीको-
पेतायां तत्त्वसंग्रहाधिकारे गुरुपर्वक्रमाख्यं
द्वितीयमाह्निकम् ॥ २ ॥

समाप्ता श्रीमदीश्वरप्रत्यभिज्ञा ॥

ओं तत्सत् ।

श्रीमत्प्रतापभूभर्तुराज्ञया प्रीतये सताम्
मधुसूदनकौलेन संपाद्येयं प्रकाशिता ॥

